# A THESIS ON TARKA SASTRA

## TABLE OF CONTENTS.

### CHAPTER I.

1. **Introductory:**

(*a*) The characteristics of Darsana Sastras and their classifications.

(*b*) On the followers of the Darsanas.

2. The characteristics of the Orthodox systems and proofs to maintain that Nyaya and Vaiseshika darsanas fall under that School.

### CHAPTER II.

**On Nyaya Darsana:**

1. The origin of Nyaya Sastra.

2. An enquiry into the different names of the Darsana of Akshapada.

(*a*) The need for naming a Darsana or School.

(*b*) That Akshapada's Darsana stands the test of a Sastra.

(*c*) The different names of Nyaya Darsana.

(*d*) Reasons for such names.

3. **On the Importance of Nyaya Darsana.**

(*a*) That references are found in the writings of sages and saints.

(*b*) That it is an Atmavidya.

(*c*) Reconciliation of certain charges levelled against the Nyaya Darsana.

(1) Refuting the observations made on the point by Vindyeswari Prasada Dwivedi in his masterly introduction to Nyayavartika.

(2) Refuting the conclusions arrived at by S. C. Vidyabhushan.

4. **On the Authorship of Nyaya Darsana:**

(*a*) On the name of the Author.

(*b*) On Gotama.

(1) References in Vedic Texts on Gotama.

(2) Mention of two Gotamas.

(3) The view of Vindyeswari Prasada Dwivedi in his introduction to Nyayavartika.

(4) A refutation to the above view.

(5) That Raghugana Gotama is a descendent of Gotama.

(6) That the descendents of Gowtama separated themselves into ten groups and that Raghugana Gotama was the head of one such group.

(7) That the author of Nyaya Darsana must be a descendent of Gotama.

5. That all the five chapters of Nyaya Darsana are the works of Gowtama the position of S C. Vidyabhushan criticised.

## CHAPTER III.

**On Vaiseshika Darsana:**

1. The origin of Vaiseshika Darsana.
2. Answering the objections to the commencement of works in general and Vaiseshika Darsana in particular.
3. On those that take up a systematic study of these orthodox Schools.
4. On the different names of Kanada's system.
5. On the authorship of Vaiseshika Darsana.

(*a*) That the Authors of Nyaya and Vaiseshika Darsanas were contemporaries and that both studied under the same Guru (Preceptor)

6. That Vaiseshika Darsana is older than the commentaries on Nyaya Darsana.

## CHAPTER IV.

**The chronological order of the six systems of Philosophy :**

1. The chronological order of Nyaya and Vaiseshika Darsanas.

   (*a*) The same conception of the individual soul in both the systems.

   (*b*) Materials for placing Nyaya Darsana prior to Vaiseshika Darsana.

2. On the six systems of Philosophy.

3. On the material cause of the Universe

4. That the Nyaya-Vaiseshika Darsanas are prior to Kapila aud Patanjala systems.

5. A refutation of the views of the Author of Nyayakosa.

6. That the Brahma Mimamsa is posterior to both the Nyaya-Vaiseshika Darsanas.

7. That the Purvamimamsa is posterior to both the Darsanas.

(*a*) That sound (sabda) is trancient is the concept of Nyaya-Vaiseshika Schools.

(*b*) Refuting this, Purvamimamsa maintains that sound (sabda) is eternal.

## CHAPTER V.

**A critical study of the commentaries on Nyaya Vaiseshika texts.**

1. On Nyaya Bashya (commentary on Nyaya Darsana)

2. On the Authorship of Nyaya Bashya. (Views of S. C Vidyabhushan criticised).

3. On the Vaiseshika Bashya (commentary on Vaiseshika Darsana).

4. A criticism of the conclusions of Chandra Kanta Bhattacharya that Prasastapada Bashya does not stand the test of a Bashya.

5. Comparative merit and demerit of the several commentaries on Vaiseshika Darsana.

श्रीमते रामानुजाय नमः

# ॥ प्रशस्तिपत्रिका ॥

सोऽयमिह वाच्यमानोऽस्माभिरध्यक्षितप्रकृतिर्ज्यायान् विमर्शः। यथासमयं विषयं चाऽवधारितप्रकृतेरामुष्यायणः। नचेदमदसीयं दूषणं यददसीयं कार्यं पन्नार्थगोचरा प्रतिपत्तिः। भवति हि विशृङ्खलपदार्थानुभवश्शृङ्खलितपदार्थपर्य-न्नवाक्यार्थापूर्वतानुपमर्दनः। अयमेव च कविसमयो यदनादिसिद्धेष्वेव विशृ-पदार्थेषु शृङ्खलाविशेषोत्प्रेक्षणाधीनं चमत्कारातिशयाधानशक्त्याधानम्। तदयं गतार्थाधिगमः। अनधिगतार्थाधिगमस्त्वयं विचित्रार्थगोचरश्चमत्कृतिविशेषावि-वीति साधीयानयं विमर्शः। क्वचिन्नवीनपथसञ्चरणचातुरीं कुत्रचित्प्राचीनप्रस्था स्थानपाटवमन्यत्र विमर्शकपथावमर्शवैभवमुपदर्शयन्नयं हृद्यो विमर्शः ॥

वेदान्तवर्धिनी संस्कृतकलाशाला,
श्रीभूतपुरी.
31-7-34.

इति

ति. आसूरि, रामानुजाचार्याः,
उभयवेदान्तवर्धिनी प्रधानाध्यक्षचरणाः

श्रीः

श्रीमते रामानुजाय नमः

# प्रस्तावना.

अथ तावत्संमुद्य प्रकाश्यते तर्कशास्त्रनिरूपणसमाख्याकः प्रबन्ध उल्लासपञ्चकपरिकर्मितो राजकीयैर्मद्रनगरप्रान्तीयविद्याविभागाधिकारिभिस्तर्कशास्त्रविमर्शननियुक्तेन तत्पोषितेन मया। तर्कशब्दितमानमेयप्रतिपादकयोर्न्यायवैशेषिकयोर्द्वयोरेव च विमर्शकेनाभावि तर्कशास्त्रविमर्शनप्रवृत्तेन मया। तर्कशब्दो हि व्युत्पत्तिभेदेन मानमेययोर्वर्तत इति। तत्र तावत्प्रथमोल्लासे न्यायवैशेषिकविमर्शविषयकप्रेक्षावत्प्रवृत्त्यौपयिकं न्यायवैशेषिकयोरास्तिकदर्शनत्वमुपपादितम्। द्वितीयतृतीययोश्च न्याय वैशेषिकयोरवतारप्रकारसमाख्याभेदावभ्यर्हितत्वप्रकारः प्रणेतृपुरुषविशेषौ च सप्रपञ्चं निरूप्यन्ते विद्याभूषणन्यायवार्तिकभूमिकाकृन्मतप्रतिक्षेपेण। द्वितीय आन्वीक्षक्याः पञ्चाध्यायीत्वं च विद्याभूषणपक्षप्रतिक्षेपेण व्यवस्थाप्यते। चतुर्थोल्लासे च न्यायकोशकारमतखण्डनेन षड्दर्शनीपौर्वापर्यं निरूप्यते न्यायवैशेषिकयोस्सकलेतरास्तिक दर्शनप्राचीनत्वलक्षणस्वभावविशेषपरिच्छित्त्यै। पञ्चमोल्लासे च न्यायवैशेषिकभाष्याणि तत्प्रणेतारो वैशेषिकव्याख्यानसामञ्जस्यादि च निरूप्यन्ते विद्याभूषणचन्द्रकान्तमत प्रतिक्षेपेण। अनेन च तर्कशास्त्रनिरूपणग्रन्थेनावगन्तव्या अनेके न्यायवैशेषिकस्वभावाः प्रतिपाद्यन्त इति समग्रग्रन्थदर्शिनामपरोक्षम्। विमर्शविनियोजितकालपरिमितेर्न्यायवैशेषिकव्याख्यापरिशीलने कियदेव व्यापृतम्। सकलन्यायवैशेषिकव्याख्या परिशीलनं हि पुरुषायुषैकसाध्यमिति। अतस्त्याश्च प्रमादायातास्सर्वेऽपि दोषाः प्रेक्षा वद्भिर्दयया मर्षणीयाः। शुद्धशब्दस्वरूपावेदकपत्रिकापि संयोजिता वर्तते। समग्रग्रन्थसमालोकनेनात्रत्यगुणग्रहणेन चानुग्राह्योऽयमिति साञ्जलिबन्धं प्रेक्षावतः प्रार्थये। तर्कशास्त्रविमर्शननियोजकेष्वस्मत्पोषकेषु चास्मदीयां कृतज्ञतां सप्रेम प्रकटीकरोमि॥

| | |
|---|---|
| उभयवेदान्तवर्धिनी संस्कृतकलाशाला, श्रीभूतपुरी. 30- 1-34 | इति सविनयमावेदयिता **प्र. अण्णङ्गराचार्यः** प्रबन्धा। |

# शोधनिका

| पु.सं. | पङ्क्तिः | सं. |
|---|---|---|
| १ | ११ | यथाह । |
| २ | १४ | सेत्स्यति । |
| ,, | ,, | वर्तिना । |
| ३ | २४ | बोध्यम् । |
| ४ | २३ | वैशेषिक । |
| ६ | २० | वेदार्थे । |
| ७ | १६ | पहति । |
| ,, | २७ | भाष्यजातमवर्तयत् । |
| ८ | २६ | ऽत्रैवो । |
| ९ | १७ | परिकीर्तित । |
| १० | १३ | संस्पर्शि । |
| ,, | १४ | लोके । |
| ,, | २० | व्यवस्थापकत्वम् । |
| ,, | २१ | प्रधानता । |
| २ | १९ | गमाश्रित । |
| ३ | २५ | उदाहरणम् । |
| ४ | १६ | ऽवगम्येत । |
| , | २६ | समाख्या । |
| , | २७ | विषयत्व । |
| ५ | १२ | याज्ञ्यवल्क्य । |
| , | २५ | स्वामिनि । |
| ६ | २६ | विजयनगर संस्कृत-ग्रन्थमाला । |

| पु.सं. | पङ्क्तिः | सं. |
|---|---|---|
| १७ | १९ | ऽऽन्वीक्षकी । |
| ,, | २२ | तर्क । |
| १८ | ५ | द्ववतारेण । |
| ,, | १८ | पदार्थो । |
| १९ | १२ | तर्केण । |
| ,, | २७ | पनिषद । |
| २१ | १९ | साङ्ख्य । |
| २२ | ४, ६ | वातिक । |
| ,, | ८ | निर्दिष्टम् । |
| ,, | २४ | उपपादितम् । |
| ,, | ,, | ऽभ्यर्हितत्वम् । |
| ,, | २६ | प्रतिपादितम् । |
| २३ | १२ | पादे । |
| २४ | २१ | बहुलम् । |
| ,, | २६ | वार्तिक । |
| २५ | १२ | पूर्वः । |
| ,, | १३ | निर्दिष्टो । |
| ,, | १४ | रहूगण । |
| ,, | २६ | द्रष्टव्यम् । |
| २६ | २ | विषये । |
| २७ | १० | गोतमस्य । |
| ,, | १५ | ज्येष्ठ । |
| ,, | २६ | परंतु । |

| पु.सं. | पङ्क्तिः सं. | |
|---|---|---|
| २८ | ६ | प्रतिपादनम् । |
| ,, | २१ | पुरुष । |
| २९ | ५ | पुरुष । |
| ,, | ८ | निरूपकस्य । |
| ,, | २८ | दर्शन । |
| ३० | २५ | वैशेषिक । |
| ,, | २७ | मर्थ । |
| ३२ | २१ | सर्वलेत्यतः पूर्वं सर्व- देति योज्यम् । |
| ३३ | २७ | प्रकरणे । |
| ३४ | ५ | वैशेषिक । |
| ३५ | ३ | पारलौकिक । |
| ३७ | ५ | समाख्यानिरूपणम् |
| ,, | २६ | वैशेषिकम् । |
| ३९ | १४ | दर्शन । |
| ,, | २३ | प्रवृत्तये । |
| ,, | २७ | हिं । |
| ४१ | २ | कणभक्षो । |
| ४२ | ,, | निर्देशः प्रतिपाद्य । |
| ,, | ११ | तर्कशास्त्र । |
| ४३ | २ | व्यप । |
| ,, | ११ | श्रीधरो । |
| ४४ | २२ | प्रतिपदितम् । |
| ,, | २६ | ब्रह्मदः : |
| ४५ | ७ | वाचित्वम् । |
| ,, | १८ | पवर्ग । |
| ,, | २५ | गम्यते । |

| पु.सं. | पङ्क्तिः सं. | |
|---|---|---|
| ४८ | २३ | ज्ञेया । |
| ,, | २५ | मनोनिरूप |
| ५१ | २२ | निबन्धनोऽपी करणत्वेति |
| ५४ | २६ | विलक्षणात |
| ५५ | १२ | अयाव द्रव्य |
| ,, | १८ | गुणास्ताव |
| ५६ | ५ | निरूपणैक तिपा |
| ५७ | १० | दर्शन । |
| ५८ | ७ | संस्पर्शिन्यो |
| ,, | १४ | बादरायणे |
| ५९ | १३ | शरणैर्द्विजैः |
| ,, | २४ | शाब्दार्थवि |
| ६० | २२ | अभाविष्ट |
| ६१ | १० | महर्षि । |
| ६२ | १८ | साङ्ख्य । |
| ६३ | २० | कश्चिद्विशेष |
| ६४ | ९ | प्राक्तनत्वम् |
| ,, | १८ | शक्त्यावेश |
| ६६ | १० | चेन्मैवं । |
| ,, | १४ | चेन्नित्य । |
| ६७ | १३ | रूपमरस । |
| ६१ | २० | शब्दा । |
| ७७ | १४ | सूत्राणां । |
| ७८ | २–२ | शाङ्कर । |

एवं अशुद्ध्यन्तरनिराकरण
प्रेक्षावद्भिः कार्यम् ॥

श्रीः

श्रीमते रामानुजाय नमः.

# तर्क शास्त्र निरूपणम् ॥

## न्यायवैशेषिकयोरास्तिकदर्शनत्व निरूपणम् ॥

### तर्कशास्त्रनिरूपणोपोद्घातः॥

अथ खलु संस्कृतवाङ्मयं बहुधाऽवस्थितं सशिरस्का वेदा शिक्षाव्याकरणच्छन्दोनिरुक्तज्योतिषकल्पा स्स्मृतिव्यपदेशभाञ्जि धर्मशास्त्राणीतिहासपुराणानि दर्शनानि काव्यनाटकाख्यानकाख्यायिकाप्रभृतीनि तद्व्याख्यानानि चेति ॥

तत्र तावदधिदर्शनं प्रवर्तामहे ।

### ॥ दर्शनलक्षणं तद्विभागश्च ॥

दर्शनं नाम वस्तुतत्वनिरूपकोऽभ्यर्हितपुरुषप्रणेतृकश्शब्दसन्दर्भविशेषः । यथाऽह न्यायकोशकारो दर्शनशब्दनिर्वचनेः—

"दर्शनं तत्वज्ञानसाधनं शास्त्रम्" इति

तच्च द्विविधं बाह्यमान्तरञ्चेति । अत्र बाह्यत्वमान्तरत्वञ्च वेदाऽपेक्षं वेदितव्यम् । तत्र बौद्धचार्वाकादि वेदबाह्यम् । न्यायवैशेषिकसाङ्ख्ययोगमीमांसाश्च वेदान्तरत्वेन गण्यन्ते । दर्शनानां तावद्वेदबाह्यत्वं वेदप्रामाण्यप्रतिक्षेपकत्वरूपं वेदान्तरत्वं च तेषां वेदप्रामाण्यप्रतिपादकत्वरूपं मन्तव्यम् ॥

तत्र वेदबाह्यानि दर्शनानि परिगृह्णन्तो नास्तिकाः कथ्यन्ते । वेदबाह्यानां दर्शनानां नास्तिक्याद्युक्तं तदनुवर्तिनामपि तत् । दर्शनानां पुनस्तत् । "[१]नास्तिवादार्थशास्त्रं हि धर्मविद्वेषणं पर" मिति हरिवंशवचनप्रतिपन्नम् ॥

वेदान्तराणि च दर्शनानि परिगृह्णन्त आस्तिका व्यपदिश्यन्ते । वेदान्तराणां दर्शनानामास्तिक्याद्युक्तं तदनुवर्तिनामपि तत् । दर्शनानां चास्तिक्यं

१. हरिवंशे २८ अध्याये.

१"द्वौ योगौ द्वे च मीमांसे द्वौ तर्काविति षड् बुधाः शास्त्राण्याहु" रित्यभि: वचनेन न्यायादेर्यथावस्थितार्थशासकत्वलक्षणशास्त्रता प्रतिपादकेनाऽवगम्यते ॥

दर्शनानामास्तिक्यं नास्तिक्यं च वेदप्रामाण्याद्यस्तिताप्रतिपादकत्वरूपं, स्तिताप्रतिपादकत्वरूपं चेति बोध्यम् ॥

**॥ पुरुषभेदनिरूपणम् ॥**

दर्शनभेदाऽधिकृतानां च पुरुषाणामास्तिकनास्तिकव्यपदेशविभागो प्रामाण्याभ्युपगमाऽनभ्युपगमलक्षणो वरीवर्ति नास्तिकसम्बन्धिन्या वैदिकार्थ तेरपि तत्तदर्थप्रतिपादकाम्नायविमतिपूर्वकत्वात् ।

निरीश्वरसांख्यप्रवर्तकश्च कपिलो वेदप्रामाण्यवादी शोचनीय एव दैवह न पुनर्नास्तिकत्वेन गर्हणीयः वस्तुतस्त्वीश्वराऽनभ्युपगमलक्षणं तस्याऽपि ना स्थितमेव ॥

न्यायवैशेषिकयोः पुन*राम्नायप्रामाण्येश्वरनिरूपकयोरास्तिकदर्शनत्वमे स्यति । तदनुवर्तनामास्तिक्यञ्च ।

॥ इति तर्कशास्त्रनिरूपणोपोद्घातः ॥

---

टिप्पणी—*अत्र न्यायवैशेषिकयोरास्तिकदर्शनत्वपरिचायकाम्नाय ण्येश्वरनिरूपणयोः कञ्चिदर्थं प्रतिपादयामस्तयोः पौर्वापर्यनिर्णयाय ।

**॥ न्यायवैशेषिकयोराम्नायप्रामाण्यसमर्थनैकरूप्योपपादनम् ॥**

न्यायवैशेषिकदर्शने तावदाप्तप्रणीतत्वादाम्नायस्य प्रामाण्यसिद्धिं प्र यतः । तथाहि, २"मन्त्रायुर्वेदप्रामाण्यवच्च तत्प्रामाण्यमाप्तप्रामाण्या" दिति सूत्रम् ।

एतत्सूत्रघटकस्तावत्तच्छब्दः "तदप्रामाण्यं" इति सूत्रप्रकृताऽऽ आप्तशब्दश्च वेदवक्तृपरः । तत्प्रामाण्यस्यैव तत्प्रणीताम्नायप्रामाण्यव्यवस्थ सम्भवात् । आप्तशब्दितस्य वेदवक्तुः प्रामाण्यञ्च प्रमाऽविनाभाव एव प्रम

---

१. वचनमिदं न्यायकोशकृता दर्शनशब्दनिर्वचन उपात्तम्. २. न्यायद अध्याये, १ आन्हिके, ६८ सूत्रम्.

## १. न्यायवैशेषिकयोरास्तिकदर्शनलक्षणोपपादनम् ॥

सद्दर्शनानि तावत्संसाराग्निना पच्यमानानां चेतनानामनुग्रहकृते परमकारु-

---

पर्यवसायी। यथोक्तं [१]न्यायकुसुमाञ्जलावुदयनाचार्यैः "प्रमासमवायो हि प्रमातृव्यवहारनिमित्तम्। प्रमयात्वयोगव्यवच्छेदेन सम्बन्धः प्रमाणव्यवहारनिमित्तं। तदुभयञ्चेश्वर" इति। प्रमाऽविनाभावश्च करणतयाश्रयतया वा ॥

प्रत्यपादयच्च माधवाचार्यस्सर्वदर्शनसङ्ग्रहेऽक्षपाददर्शने ईश्वरसाधारणं [२]प्रमाणलक्षणम् "साधनाश्रयाऽव्यतिरिक्तत्वे सति प्रमाव्याप्तं प्रमाणं" इति ग्रन्थेन।

तदेवं "तत्प्रामाण्यमाप्तप्रामाण्या" दिति न्यायसूत्रखण्डेन वेदवक्तृप्रमात आम्नायप्रामाण्यं समर्थितं। "[२]तद्वचनादाम्नयस्य प्रामाण्य" मिति वैशेषिकसूत्रघटकश्च तच्छब्दो बुद्धिस्थपरामर्शकतास्वभावो निखिलजगत्करणौपयिकनित्याऽपरोक्षसर्वविषयप्रमासमवायिनमीश्वरमाचष्टे। सर्वज्ञप्रणीतत्वादाम्नायस्य प्रामाण्यं साधीय इति सूत्रेऽस्मिन् प्रतिपाद्यते। न्यायवैशेषिकयोश्चाम्नायप्रामाण्यसाधकहेतूक्तिवैचित्र्यमेव। नत्वर्थवैचित्र्यमिति सिद्धं तयोराम्नायप्रामाण्यसमर्थनैकरूप्यम्। इति ॥

## ॥ अथेश्वरविषये न्यायवैशेषिकयोरैकमत्योपपादनम् ॥

निखिलकार्यवर्गकर्तारमस्मदादिविलक्षणञ्चेश्वरं न्यायवैशेषिके प्रतिपादयतः। यथा,

"तत्प्रामाण्यमाप्तप्रामाण्या"दिति न्यायसूत्रखण्डस्तावदाम्नायप्रामाण्यप्रयोजकप्रामाण्याश्रयमीश्वरं प्रतिपादयति। "तत्कारितत्वादहेतु"रिति (न्या. ४, अ. १, आ. २१) न्यायसूत्रञ्च निखिलजगत्कर्तारं तम्।

कस्मात्पुनरक्षपाद स्स्वीये दर्शने ईश्वरं न लिङ्गैर्व्यवस्थापयाञ्चकार? । प्रमाणनिरूपणप्रवृत्तत्वादेव। आप्तप्रामाण्यादाम्नायप्रामाण्यं प्रतिपादयन् पुनरक्षपादो हेतुसिद्धिं प्रेक्षावत्सम्पाद्यां जानन्नेश्वरसाधने व्याप्तवान्।

---

टीका—१. अत्रेदं बोध्यम्। प्रमाणचातुर्विध्यप्रतिपादकसूत्रस्य प्रमितिकरणविभागपरत्वात्, प्रत्यक्ष एवेश्वरप्रमाणस्याऽन्तर्भावाद्वा नेश्वरप्रामाण्ये दोष इति। २. वैशेषिकदर्शने १, अध्याये १, आह्निके ३. सूत्रम्।

णिकैः परमर्षिभिः प्रवर्तितान्यपुनरावृत्तिलक्षणनिश्रेयसोपायप्रतिपादकानि । तेष्

टि—कणभक्षमुनिश्च प्रमेयनिरूपणप्रवृत्तो न्यायप्रतिपादितमाम्नायाऽप्रामाण्य प्रतिक्षेपेणाम्नायप्रामाण्यसाधनमीश्वरोक्तत्वहेतुकं जानन् ईश्वरलिङ्गप्रतिपादनेन म्नायप्रामाण्यसाधकहेत्वसिद्धिं [१]पर्यहार्षीत् । तथाहि ॥

ईश्वरलिङ्गं नामरूपात्मकः कृत्स्नकार्यवर्गो वेदवाक्यानि चेति द्वयं प्रति पादयत् तावत्

"संज्ञाकर्म त्वस्मद्विशिष्टानां लिङ्गम्" (वै--२. अ १. आ १८)

"बुद्धिपूर्वा वाक्यकृतिर्वेदे" (वै—६. अ १. आ १.) इति वैशेषिक सूत्रद्वयमुपलभ्यते ।

तत्र द्वितीयं सूत्रं वेदवाक्यानां परमुखापेक्षसिद्धीनां वक्तृबुद्धिपूर्वकत्व प्रतिपादयत्कृत्स्नवेदवाक्यरचनासमर्थवेदार्थविज्ञानाश्रयपुरुषधौरेयसत्तामावेदयति। वेद वाक्यरचनौपयिकशरीरविशेषे चेश्वरीये जीवीयकर्मण एव हेतुत्वमनुसन्धेयं नचान्यदीयकर्मणोऽन्यशरीरारम्भकत्वाऽनुपपत्तिः । भार्यादिशरीरस्य भर्त्राद्यदृष्टहेतु कताया दर्शनात् । तथाप्यन्यशरीरस्याऽन्यादृष्टमात्रहेतुकत्वमदृष्टमिति चेत् । तत् किं? । नहि भार्यादिशरीरस्य शरीरत्वनिबन्धनं स्वकर्मारभ्यत्वं । किन्तर्हि? स्वकर्मफलाऽनुभवनिबन्धनं । अतश्चोभयाऽदृष्टकारितमुभयोपभोगसाधनमेव शरीरं कर्मिण ईश्वरस्य न घटते। न तु शरीरसामान्यनिषेधः प्राप्नोतीति ॥ नचैतादृ शशरीरित्वं संसारितां भगवत आपादयति । स्वकर्महेतुकशरीरसम्बन्धस्यैव तदापाद कत्वात् ॥

तमिमं वेदोच्चारणौपयिकशरीरपरिग्रहमीश्वरस्य न्यायाचार्योदयनो न्यायकु

टी—१. अत्रेदमवधेयम् । "तस्मादागमिक" इति (वै. २–१–१७) सूत्रप्रतिप द्याम्नायप्रामाण्यकथन्ताशङ्कायामीश्वरप्रकरणारम्भोपलम्भाद्वैशेषिकगतस्येश्वरप्रकरणस्याऽऽम्नायप्रा माण्यसाधकहेत्वसिद्धिपरिहारपरत्वमवगम्यते । किञ्च, ईश्वरोक्तत्वादाम्नायस्य प्रामाण्यमि प्रथमाध्याये प्रतिजज्ञे । द्वितीय ईश्वरसिद्धिप्रकारमवर्णयत् । षष्ठे वेदानामीश्वरोक्तत्वं प्रत्यपाद यत् । ईश्वरवचनादाम्नायस्य प्रामाण्यं निगमयंश्च शास्त्रमुपसञ्जहार कणभक्षमुनिः । अत काणादस्याम्नायप्रामाण्यव्यवस्थापकत्वं शक्याऽवगममिति ॥

न्यतमं न्यायदर्शनम् । प्रमाणादिपदार्थतत्त्वज्ञाननिश्श्रेयसोपायत्वप्रतिपादकं प्रमाणादिनिरूपकञ्चेदं सम्भावयति स्वमास्तिकदर्शनम् ॥

---

माञ्जलौ द्वितीयस्तबके सर्गप्रलयोपपादकद्वितीयश्लोकव्याख्यानावसरे समयौपयिकं घटादिकार्यव्युत्पत्त्यौपयिकञ्चेश्वरीयं शरीरपरिग्रहं प्रतिपादयन्नभ्यनुजानाति ॥

अतस्सिद्धमीश्वरस्य वेदवक्तृत्वम् । कुतस्तर्हि बुद्धिमत्पूर्वकत्वमेव वेदवाक्यानां नाऽसूत्रयत् कणभक्षः ? । सूत्रलाघवेऽत्यादरादेव ।

## ॥ अथ वेदवाक्यप्रयोजकज्ञानापरोक्ष्यप्रतिपादनम् ॥

वेदवाक्याधीनसिद्धिकञ्च कृत्स्नवेदार्थविज्ञानमपरोक्षरूपमेव । नहि तज्ज्ञानं शब्दान्तरमजीजनदित्यत्र प्रमाणमस्ति । नाऽपि लिङ्गं । कृत्स्नवेदार्थाऽनुमापकलिङ्गाभावात् । भावे वा तज्ज्ञानं किं लैङ्गिकमाहोस्विदपरोक्षं । ईश्वरज्ञानाऽपरोक्षताविद्वेषिणः तस्याऽपि लैङ्गिकत्वस्वीकारेऽनवस्था प्रसज्येत । द्वितीये तु वेदार्थविज्ञानस्यैवाऽपरोक्षभावस्स्वीकार्यः । नत्वप्रामाणिकलिङ्गदर्शनस्य । किञ्च, [१]कार्याऽनुमानसिद्धस्य सर्वविषयस्य प्रमात्मकस्य नित्याऽपरोक्षज्ञानस्यैवेश्वरीयस्य कृत्स्नवेदार्थविषयतया सिद्धं वेदार्थज्ञानापरोक्ष्यं । नह्येकत्रैव ज्ञाने परोक्षत्वाऽपरोक्षत्वे समावेशमर्हत इति ॥

## ॥ अथ वेदार्थविज्ञानयाथार्थ्य निरूपणम् ॥

नन्वथापि वेदार्थविज्ञानयाथार्थ्यं कथं निर्णेयं ?। ननूक्तं [२]कार्योपादानगोचरं ज्ञानं प्रमा । तदभिन्नञ्च वेदार्थज्ञानमिति । सत्यमुक्तम् । ततः किं ?। एकस्यापि हि ज्ञानस्य विषयभेदेन प्रमात्वाऽप्रमात्वे सम्भवत इति ।

अत्रोच्यते । ईश्वरीयं वेदार्थविज्ञानं प्रमा । नित्यज्ञानत्वात् । क्षित्याद्युपादानगोचरज्ञानवत् । नचात्राऽनुमाने बाधः प्रतिरोधो वा सुवचः । वेदार्थविज्ञानाप्रामाण्यप्रयोजकलिङ्गविशेषाऽभावात् । नचाऽनुष्ठितफलाजनककारीर्यादेरेव स्ववि-

---

टी–१. अस्य च ज्ञानस्योपादानगोचरस्याऽपरोक्षत्वमेव स्वीकार्यम् । कुलालादयो ह्युपलभमाना एव घटाद्युपादानमृदादि तं तं कार्यविशेष मारभन्त इति दृष्टमिति ॥

२. इदञ्च ज्ञानं प्रमात्मकमेव स्वीकर्तव्यम । नह्यनुपादान उपादानताभ्रमस्य भ्रमपर्यवसानाऽतिरेकेणोपादाननिर्वाह्यकार्यकरणसामर्थ्यं दृष्टमितीदमत्राऽनुसन्धेयम् ॥

काणादञ्च स्वप्रतिपाद्यद्रव्यादिपदार्थतत्त्वज्ञाननिश्रेयसोपायत्वप्रतिपादकम
त्मानं सद्दर्शनं मनुते शीलमिदं सद्दर्शनानां यत्स्वलक्षणज्ञापकत्वमिति ॥

इति तर्कशास्त्रनिरूपणे ॥
न्यायवैशेषिकयोरास्तिकदर्शनत्वनिरूपणं नाम ॥
प्रथमोल्लासः ॥

---

## ॥ तर्कशास्त्र निरूपणम् ॥

### २. न्यायदर्शन निरूपणम् ॥

### ॥ न्यायशास्त्रावतारप्रतिपादनम् ॥

उपपादितं न्यायवैशेषिकयोरास्तिकदर्शनत्वम् । अथ तयोरुत्पत्त्यादिप्र
रश्चिन्त्यते ॥ तत्र प्रथमं न्यायदर्शनमेवोत्पत्त्यादिभिर्निरूप्यते ।

तपःप्रभावसमासादितन्यायादिपदार्थविज्ञानस्तावदक्षपादस्स्वसाक्षात्कृतान
विशेषान् सूत्ररूपेण शब्दसन्दर्भेण सङ्गृह्णन् न्यायदर्शनप्रणेतृत्वेन व्यपदिश्य
यथोक्तं भट्टजयन्तेन न्यायमञ्जर्यां [१] "आदिसर्गात्प्रभृति वेदवदिमा विद्याः प्रवृ
सङ्क्षेपविस्तरविवक्षया तु तांस्तान् तत्र तत्र कर्तृनाचक्षते" इति ॥

---

षयवृष्ट्यादिफलसाधकताज्ञानाऽप्रामाण्यसंपादकस्य कृत्स्नवेदार्थज्ञानाऽप्रामाण्यगम
त्वमिति वाच्यम् । उत्पादितफलकारीर्याद्याहितप्रामाण्यताद्दशज्ञानविशेषदूषकत्व
विगुणायामिष्टौ विरहात् ॥ स्याद्वा फलोत्पादाऽनुत्पादाभ्यां तत्तत्फलसाधकताज्ञ
प्रामाण्यसंशयः। स च प्रामाण्याऽनुमापकानामनुकूल एव । तस्मात् कार्यहेतुका
मानसिद्धज्ञानोपजीवनेन वेदार्थविज्ञानयाथार्थ्यसमर्थनं साधीय एव । द्वितीयप
ध्याययोरीश्वरस्य क्षित्यादिकर्तृत्ववेदवक्तृत्वे व्यवस्थापयन्निमं वेदार्थविज्ञानयाथा
समर्थनप्रकारमभिमनुत इव कणभक्षमुनिः । इति । इममेवेश्वरसाधनप्रकारं सूत्
प्रतिपादयिष्यमाणं जानन् तद्वचनादाम्नायस्य प्रामाण्यमगदिष्ट । अनेन चाम्न
प्रामाण्यसाधकहेत्वसिद्धिः परास्ता । न्यायवैशेषिकगताभ्याञ्चाम्नायप्रामाण्यपरि
कत्वतदुपपादकत्वाभ्यां तयोः पौर्वापर्यं शक्यावगममित्यलं पल्लवितेन ॥

॥ इति प्रथमोल्लासटिप्पणी समाप्ता ॥

---

१. विजयनगरसंस्कृत ग्रन्थमालामुद्रितन्यायमञ्जर्यां ५. पुटे द्रष्टव्यम् ॥

तपः प्रभावसमासादितन्यायादियथार्थविज्ञानत्वं च अक्षपादस्य सुकृतविशेष-मूलं न्यायादिप्रतिभानमक्षपादीयं प्रतिपादयता [१] न्यायभाष्यान्तिमश्लोकेनाऽवगम्यते। अयमेव न्यायशास्त्राऽवतारो यत्प्राक्तनन्यायाद्यर्थविशेषगोचराऽभिनवशब्दसन्दर्भा-भिनिष्पत्तिरिति ।

॥ इति न्यायशास्त्रावतारप्रतिपादनम् ॥

**॥ अक्षपादीय नाम निरूपणम् ॥**

एवं न्यायदर्शनस्योत्पत्तिप्रकारः कथितः। अथ तस्य प्रतिष्ठाहेतुस्समाख्या-भेदो निरूप्यते ॥

**॥ नामकरणावश्यकता प्रतिपादनम् ॥**

उत्पन्नस्य तावन्नामकरणं शतपथेऽष्टमूर्तिब्राह्मणे निरूपितम्। यथा—

"भूतानां प्रजापतिस्संवत्सरमुषसि रेतोऽसिञ्चत्। संवत्सरे कुमारोऽजायत। सोऽरोदीत्। तं प्रजापतिरब्रवीत् कुमार किं रोदिषीति। सोऽब्रवीत्। अनपहत-पाप्मास्म्यनाहितनामा। नाम मे देहि पाप्मनोऽपहत्या इति। तं पुनः प्रजापति-रब्रवीद्रुद्रोऽसीति" इति।

नन्वेतेन चेतनानामेव नामकरणं पाप्मापहतिनिमित्तमावश्यकमिति लभ्यते। न पुनरचेतनानाम् ॥

उच्यते—पाप्मापहतिर्हि प्रतिष्ठानिमित्तम्। न खलु पाप्मवतां प्रतिष्ठा नामेति। प्रतिष्ठाफलकं च नामकरणं चेतनेष्विवाऽचेतनेष्वपि सूपपादम्। न्याय-शास्त्रादिकं हि समाख्याभेदेन व्यवस्थाप्यमानं विद्यास्थानेषु परिगणितं प्रतिष्ठितं भविष्यतीति युक्तं न्यायदर्शनादिनामकरणम्। व्यपदिश्यन्ते ह्यप्रतिष्ठिता अनाम-धेयत्वेन बहुलं लोक इति ॥

किञ्च! न्यायदर्शनादिव्यपदेशाऽधीनो ह्यास्माकीनो न्यायदर्शनादिवस्तु-सत्तावगमः। तेन च तदुपादाने प्रवृत्तिः। यदि नामैव न स्यात्। कथं पुनर्वस्त्ववगमः। कथन्तरां च तदुपादानप्रवृत्तिरुपपद्येत। मास्तु प्रवृत्तिरिति-चेन्मैवम्। भवितव्यं हि प्रवृत्त्या शास्त्रसाफल्यसम्पादिकया। 'ज्ञानप्रधानानि हि

१. "योऽक्षपादमृषिं न्यायः प्रत्यभाद्वदतां वरम्। तस्य वात्स्यायन इदं भाष्यजातमवर्तयत्॥

शास्त्राणि प्रवृत्तपुरुषविशेषप्रमित्युत्पादनेनैव सफलजन्मानि भवन्ती"ति। यदकथयन् न्यायकन्दल्यां श्रीधराचार्यः "तस्याऽप्रवृत्तौ शास्त्रं कृतमकृतं स्या" दिति। अतो नामकरणमावश्यकमिति स्थितम्। नाम्नोऽयं महिमा यत्प्रतिष्ठाहेतुत्वं शास्त्रसाफल्य-सम्पादकत्वञ्चेति। तेन च न्यायदर्शनादिनामधेयनिरूपणमुपादेयं भवति ॥

महिमान्तरञ्च नाम्ना[1]माम्नायप्रामाण्यपरिरक्षकत्व[2]फलनियमोपपादकत्वलक्ष-णमनुरुन्धाना मीमांसका नामधेयनिरूपणव्यापृता दरीदृश्यन्त इति ॥

॥ इति नामकरणावश्यकता प्रतिपादनम् ॥

## ॥ अक्षपादीयस्य शास्त्रत्वप्रतिपादनम् ॥

अक्षपादप्रणीतं तावद्दर्शनं शास्त्रमिति व्यवह्रियते *स्कान्दकालिकाखण्डे गन्धर्वतन्त्रे नैषधीयचरिते च। प्रमाणादितत्त्वानुशासकत्वादस्य शास्त्रत्वमुप-पद्यत एव ॥

टि [1]नामधेयानि तावद्विधेयार्थपरिच्छेदकानि। नाम्नो विरहे विधेयाऽपरि-च्छित्तिः। विधेयापरिच्छित्तौ च विधेयानुष्ठानाऽयोगः। सति चाऽस्मिन् कार्येऽर्थे पुरुषप्रवर्तकतया प्रमाणभावं भेजुषां विधिवाक्यानामप्रामाण्यप्रसङ्गः। तदनु विधिप्रवर्तकत्वादौ किञ्चित्कुर्वाणस्य सतः प्रमाणभूतस्यार्थवादादेरिति कृत्स्नाम्नायाप्रामाण्यं प्रसज्यते। अतो नाम्नामाम्नायप्रामाण्यपरिरक्षकत्वलक्षणो महिमाऽवश्यं स्वीकार्यः।

[2]स्याद्वा कथञ्चिद्विधेयाऽनुष्ठानम्। अथाऽपि फलाऽनुपपत्तिः सङ्कल्प-विशिष्टाऽनुष्ठानस्यैव फलसम्पादकत्वात्। सङ्कल्पस्य च नामोपरक्तत्वात्। स्याद्वा कथञ्चित् फलम्। अथापि तन्नियमाऽनुपपत्तिः। तत्तत्फलवाक्यैः फलवैलक्षण्यस्य नामवैलक्षण्यनिबन्धनस्य प्रतिपादनात्। अतो नाम्नां फलनियमोपपादकत्वमपि महिमान्तरं सिद्धम् ॥ अत्रेदमवधेयम्। नाम्नां फलनियमोपपादकत्वं फलवैलक्ष-ण्यसंपादनेन। यत्र विभिन्नसमाख्ययोरविशेषफलश्रवणम्। तत्रापि फलवैलक्षण्य-कल्पनेन कार्यकारणतावच्छेदकस्वरूपशिक्षणेन वा निर्वाहः करणीय इति ॥

* निर्दिष्टेषु वचनेषु कानिचनाऽत्रोदाहरिष्यन्ते। अपराणि च न्यायवार्तिकभूमि-कादौ द्रष्टव्यानि।

॥ अक्षपादीयस्य नामानि ॥

अक्षपादीयश्च शास्त्रं (१) न्यायः (२) न्यायविस्तरः (३) न्यायदर्शनं (४) न्यायविद्या (५) न्यायशास्त्रं (६) आन्वीक्षकी (७) तर्कविद्या (८) प्रमाणविद्ये-त्येवमादिभिस्समाख्याभेदैर्व्यवह्रियमाणं प्रतिष्ठितं भवति महीतले।

(१) तत्वशास्त्रं (२) हेतुविद्या (३) वादार्थ (४) फक्किकशास्त्रमित्यपि न्यायस्य नामानि सन्तीति विद्याभूषण आह ॥

(१) न्यायशब्देन निर्देशोऽस्य दर्शनस्यात्मोपनिषन्मु[१]ण्डकोपनिषद्याज्ञ्य-वल्क्यस्मृत्यादौ वरीवर्ति ॥

(२) न्यायविस्तरशब्देन च श्रीविष्णुपुराणादौ ॥

(३) न्यायदर्शनशब्देन च नैषधीये, १७. सर्गे, ७५. श्लोकव्याख्यानेऽ-न्यत्र च बहुलम् ॥

(४) (५) (६) न्यायविद्यादिनामत्रयेण च न्यायप्रथमसूत्रभाष्ये।

(६) आन्वीक्षकीशब्देन च मनुस्मृतौ महाभारते श्रीभागवतादौ च ॥

(६) (७) आन्वीक्षकीतर्कविद्याशब्दाभ्यां च महाभारते मोक्षधर्मे ॥

न्यायशब्दपूर्वकस्तर्कशब्दश्च न्यायदर्शनविषयकः 'मीमांसा न्यायतर्कश्चो-पाङ्गः परिकीर्तिता' इति पुराणवचने 'तस्मात्साङ्गमधीत्य ब्रह्मलोके महीयते। तथा प्रतिपदमनुपदं छन्दो भाषा धर्मो मीमांसा न्यायतर्का इत्युपाङ्गानी' ति चरणव्यूहग्रन्थे च निर्दिष्टः।

अत्र न्यायतर्कशब्दोत्तरविभक्तौ सन्दिह्यते। किं द्विवचनमाहोस्विद्बहुवच-नमिति। आद्ये तर्कशब्दो वैशेषिकदर्शनपरस्स्यात्। द्वितीये बहुवचनप्रयोजनं चिन्त्यम् ॥ पुराणवचने च षट्तर्कीसाधारणतर्कशब्दस्य न्यायशब्दविशेष्यत्वं सा-धीयः। केवलतर्कशब्दश्च न्यायदर्शनविषयस्स्कान्दकालिकाखण्डादौ प्रयुक्त उपलभ्यते ॥

---

१. १ मुण्डके, १ खण्ड, ५ वाक्यं न्यायशब्दघटितं, विषयवाक्यदीपिकायामद्दश्यत्वा देगुणकाधिकरणविषयवाक्यव्याख्याने न्यायवार्तिकभूमिकायां २० पुटे, टिप्पण्यां च निर्दि-ष्टम्। परन्तूभयत्र पाठो भिद्यते ॥

(८) प्रमाणविद्यासमाख्याश्चाऽक्षपादीयस्याऽनुमन्वाते वाचस्पतिमिश्रो जयन्तभट्टश्च ॥

॥ अक्षपादीयसमाख्याचरितम् ॥

शीलमिदं प्रबन्धसमाख्यानां, यत्प्रबन्धासाधारणविषयसंस्पर्शित्वं प्रणेतृविशेषगोचरत्वञ्चेति ॥ 'असाधारण्येन व्यपदेशा भवन्तीति हि न्यायः।' निर्दिष्टानि च नामानि न्यायासाधारणविषयसंस्पर्शीनि।

॥ प्रमाणविद्यासमाख्योपपादनम् ॥

न्यायासाधारणविषयश्च प्रमाणानि ॥ यथोक्तं वाचस्पतिमिश्रैः '[१]यद्यपीतरा विद्याः ... तथाप्येतद्विद्याप्रतिपाद्यमेव प्रमाणमुपजीव्य स्वे स्वे व्युत्पाद्येऽर्थतत्त्वे प्रवर्तन्ते। न तु प्रमाणाद्यपि व्युत्पादयन्ति' इति।

अतोऽक्षपादीयस्य प्रमाणसंस्पर्शि नाम युज्यत एव। किञ्च, पदार्थोद्देशसूत्रे निर्देशप्राथम्यात्प्रमाणस्य न्यायप्रधानप्रमेयत्वं लभ्यत इति प्रमाणसंस्पर्शि नाम न्यायस्य सेत्स्यति। दृश्यते खलु लोके सत्यप्यभिधेयबहुत्वे प्रधानप्रमेयसंस्पर्शि नामकरणम्। यथा माघकविप्रणीतप्रबन्धस्य सत्यपि स्वप्रतिपाद्यरैवतकगिर्याद्यर्थबहुत्वे प्रधानप्रमेयशिशुपालवधावलम्बनं नामकरणम्। यथावोत्तरमीमांसाया जीववियदादिप्रतिपादकत्वेऽपि प्रधानप्रमेय ब्रह्मसंस्पर्शि नामकरणमिति।

॥ प्राथम्यस्य प्रधानताऽवस्थापकत्वम् ॥

स्यादेव तदा प्रमाणसंस्पर्शि न्यायस्य नामकरणम्।

यदि निर्देशप्राथम्यस्य प्रधानप्रमेयताव्यवस्थापकत्वम्। कथंपुनर्ज्ञेयं प्राथम्यस्य प्रधानव्यवस्थापकत्वम्?।

किमत्र ज्ञेयम्?। लोकानुभवसिद्धत्वात्। दृश्यते खलु प्रथमस्य प्राधान्यं बहुलं लोके।

तमिमं लोकानुभवं जानन् जैमिनिऋषिरपि चोदनाप्राथम्यान्मुख्यत्वं प्रत्यपादयत् स्वीये पूर्वमीमांसादर्शने ॥

---

१. विजयनगरसंस्कृतग्रन्थमाला मुद्रिततात्पर्य टीकायाम्. ४७. पुटे ॥

'मुख्यं वा पूर्वचोदनाल्लोकवत्' (पूर्वमी, १२. अ २. पादे—२३) इति। अतः प्रमाणप्रथमोद्देशस्य प्रमाणगतप्रमेय प्राधान्यव्यवस्थापकत्वं साधीय एव।

प्रमाणानि हि प्रमेयात्पूर्वं निर्दिश्यन्ते प्रमेयसाधकानि। इदमेव च प्रमाणानां प्राधान्यं यत्प्रमेयनिर्वाहकत्वम्।

॥ आन्वीक्षक्याः सर्वशास्त्रोपकारकत्वप्रतिपादनम् ॥

किञ्च, प्रथमोद्देशस्य स्वविषयप्राधान्यव्यवस्थापकत्वं वात्स्यायनेनैव न्यायप्रथमसूत्रभाष्ये प्रत्यपादि। यथा, 'सेयमान्वीक्षकी न्यायविद्या प्रमाणादिभिः पदार्थैर्विभज्यमाना,

प्रदीपस्सर्वविद्यानामुपायस्सर्वकर्मणाम्।
आश्रयस्सर्वधर्माणां विद्योद्देशे प्रकीर्तिता॥' इति॥

'आन्वीक्षकी त्रयी वार्ता दण्डनीतिश्च शाश्वती' इति विद्याविभागे त्रय्यादिपूर्वत्वेनान्वीक्षकीनिर्देशहेतुस्सकलविद्यार्थप्रकाशकत्वसकलविद्यार्थप्रकाशमूलसकलक्रियानुष्ठानौपयिकत्वलक्षणमान्वीक्षक्याः प्राधान्यमिति ह्यत्र प्रतिपाद्यते॥

आन्वीक्षकीप्रतिपाद्यं प्रमाणाद्युपजीव्याभिमतार्थव्यवस्थापकत्वाच्छास्त्रान्तराणामान्वीक्षक्यास्सर्वशास्त्रोपकारकत्वं अत्र प्रतिपाद्यमानञ्च शब्दसाधुत्वान्वाख्यानपरस्य पाणिनीयस्येव साधीय एव। सर्वशास्त्रोपकारकत्वप्रकार आन्वीक्षक्यास्तात्पर्यटीकादावनुसन्धेयः। कौटिल्यश्च स्वीयेऽर्थशास्त्रे आन्वीक्षक्या लोकयात्रानिर्वाहकत्वं प्रत्यपादयदिति।

अतः प्रथमनिर्दिष्टस्य प्रमाणस्य प्राधान्यं संपद्यत एव।

॥ इति प्राथम्यस्य प्रधानताव्यवस्थापकत्वम् ॥

न्यायप्रधानप्रतिपाद्यत्वान्न्यायासाधारण्याच्च प्रमाणानां तत्संस्पर्शि नाम न्यायस्य साधीय एव।

भट्टजयन्तश्च न्यायमञ्जर्यां 'ननु वेदप्रामाण्यनिर्णयप्रयोजनश्चेन्न्यायविस्तरः। कृतमनेन। मीमांसात एव तत्सिद्धेः। तत्र ह्यर्थविचारवत्प्रामाण्यविचारोऽपि कृत एव॥ सत्यम्। स त्वानुषङ्गिकः। मुख्यस्त्वर्थविचार एव। पृथक् प्रस्थाना हीमा

विद्याः । सा च वाक्यार्थविद्या । न प्रमाणविद्या ' इति ग्रन्थेन मीमांसायाः प्रमाणविद्यात्वं प्रतिक्षिपन्नान्वीक्षिक्याः प्रमाणविद्यासमाख्यां मनुते ॥

॥ इति प्रमाणविद्यासमाख्योपपादनम् ॥

॥ आन्वीक्षिक्यादि समाख्यास्वनुमानलक्षण प्रमाणावलम्बनाः ॥

ननु प्रमाणविशेषोपरक्तसमाख्याभेदे न्यायस्य स्वीक्रियमाणे प्रत्यक्षादि-प्रमाणादिविशेषोपरक्तनामान्यपि स्वीकार्याणि स्युः । सत्यम् । ततः किम् ? । तानि कुतो न निर्दिश्यन्ते । नामान्तरवत्तान्यपि हि निर्देष्टव्यानि ॥ नेति ब्रूमः । व्यव-ह्रियमाणान्येव हि नामान्युपपादनीयानि । नत्वनारूढव्यवहारपथानि । निर्देशश्चोप-पादनार्थ इति ॥

किञ्च, वर्तमानविषयं प्रत्यक्षम् । त्रैकाल्यविषयावनुमानागमौ । तत्र शब्दप्रमाणस्य प्रवक्तृपुरुषापेक्षा बहुलमुपलभ्यते । अनुमानस्य चाऽनुमातृबुद्धि-मात्रापेक्षा । अतः प्रमाणविशेषोपरक्तं नाम निरपेक्षप्रवृत्तिमत् त्रैकाल्यविषयानुमा-नावलम्बनं साधीयः ॥

वस्तुतस्तु प्रत्यक्षादिनिरूपकस्याप्यस्य सपरिकरानुमाननिरूपणे विततव्यापारस्यानुमानोपरक्तं नाम साधीय इति सारम् ॥

॥ आन्वीक्षकीसमाख्योपपादनम् ॥

आन्वीक्षकीसमाख्या चाऽक्षपादीयस्यान्वीक्षाशब्दितानुमाननिरूपकस्य सम्पत्स्यत एव । उपपादितञ्चैतत् '[१]प्रत्यक्षागम श्रितमनुमानं साऽन्वीक्षा । तया प्रवर्तत इत्यान्वीक्षकी न्यायविद्या न्यायशास्त्र'मिति न्यायाद्यसूत्रभाष्ये । आत्ममनननिरूपणप्रवृत्तं वाऽक्षपाददर्शनमान्वीक्षकीव्यपदेशभागिति सुवचम् । श्रवणानन्तरभाविनो मननस्यान्वीक्षात्वोपपत्तेरिति ॥

॥ न्यायदर्शनादिसमाख्योपपादनम् ॥

भट्टजयन्तेन न्यायमञ्जर्यां ' तर्कशब्देन न्यायविस्तरशब्देन चैतदेव शास्त्र-मुच्यते । न्यायतर्कोऽनुमानं सोऽस्मिन्नेव व्युत्पाद्यते ' इति ग्रन्थेनानुमाननिरूप-कस्यास्य न्यायदर्शन आनुमानवाचिन्यायतर्कादिसमाख्योपपादिता ।

---

१. प्रत्यक्षागमाश्रितत्वं चाऽनुमानस्य प्रात्यक्षिकीं शाब्दीं वा व्याप्तिप्रमितिमुपजीव्य प्रवर्तमानत्वं प्रत्यक्षागमाश्रितविषयत्वं चेति बोध्यम् ।

परानुमितिप्रयोजकस्य प्रतिज्ञाद्यवयवपञ्चकसमुदायस्य न्यायशब्दितस्य पूर्वोक्तराङ्गकलापसहितस्य प्रतिपादकमक्षपादीयदर्शनं न्यायादिसमाख्यामश्नुत इत्यपि सुवचम् ॥

अनुमानस्य प्रतिज्ञाद्यवयवपञ्चकसमुदायस्य च न्यायशब्दवाच्यत्वं तात्पर्यटीकायां प्रत्यपादयद्वाचस्पतिमिश्रः,'पञ्चरूपश्चतूरूपो वा हेतुर्न्यायः। प्रतिज्ञाद्यवयवपञ्चकसमुदायो वा। नीयते विवक्षितार्थसिद्धिरनेनेति न्याय इती'ति ॥

प्रतिज्ञाद्यवयवेषु प्रमाणाभिष्वङ्गं न्यायाद्यसूत्रे [१]भाषमाणश्च वात्स्यायनः प्रधानप्रमेयप्रमाणनिरूपणप्रवणस्य शास्त्रस्य न्यायादिसमाख्योपपत्तिं ज्ञापयति ।

अत्रेदं बोध्यम् । यथा प्रमाणनिरूपणप्रवणस्याक्षपादीयदर्शनस्य प्रमाणविद्येति नाम । प्रमाणपरिबृढानुमानगोचराणि च नामानि संभवन्ति । एवमेकार्थप्रतिपादनसमर्थनिखिलप्रमाणगर्भप्रतिज्ञाद्यवयवपञ्चकसमुदायात्मकन्यायावलम्बनमपि नाम *साधीय एव ।

---

*॥ अक्षपादीयसमाख्यानामनुगतविषयत्वप्रतिपादनम् ॥

टि—अत्रायं निष्कर्षः। प्रामाण्यविशिष्टविषयताकमक्षपादीयस्य विषयोपरक्तं नाम । प्रामाण्यवैशिष्ट्यञ्च स्वावच्छिन्नत्व स्वावच्छिन्नविभाजकद्वितीयावच्छिन्नत्व स्वविशिष्टचतुष्टयत्वविशिष्टत्वान्यतमसम्बन्धेन । आद्यसम्बन्धः प्रमाणविद्यासमाख्यासङ्ग्राहकः। द्वितीय आन्वीक्षिक्यादिसमाख्यासङ्ग्राहकः। तृतीयो न्यायदर्शनादिसमाख्यासङ्ग्राहकः। तृतीयसम्बन्धघटकस्ववैशिष्ट्यञ्च स्वव्याप्यत्वसम्बन्धेन ॥

चतुष्टयत्वविशिष्टत्वञ्च स्वाश्रयतादात्म्य पञ्चम्यन्तत्वविशिष्टस्वाश्रयविषयबोधकत्वस्वाश्रय प्रयोज्यत्व स्वाश्रयप्रयोज्यतथाशब्दघटितत्व स्वावच्छिन्नगतैकार्थप्रतिपादनसामर्थ्योपपादकत्वान्यतमसम्बन्धेन स्वविशिष्टसमुदायवृत्ति तादृशसमुदायत्वनिष्ठन्यूनवृत्तित्वानिरूपक तादृशसमुदायत्वाश्रय प्रतिज्ञाद्यव्यवहितोत्तरत्व शून्यहेत्वादिगत समुदायत्वान्यसमुदायत्वावच्छिन्नत्वसंबन्धेन । चतुष्टयत्ववैशिष्ट्यनिया-

---

१. "तेषु प्रमाणसमवायः। आगमः प्रतिज्ञा। हेतुरनुमानम्। उदाहरण प्रत्यक्षम्। उपनय उपमानम्। सर्वेषामेकार्थप्रतिपादन सामर्थ्यप्रदर्शनं निगमन"मिति न्यायभाष्यमत्राऽनुसन्धेयम् ॥

'मथ्नामि मनसा तात दृष्ट्वा चान्वीक्षकीं पराम् ॥' इति महाभारतगत-मोक्षधर्मवचनं परशब्देनैवाभ्यर्हितत्वं आन्वीक्षकीशब्दितस्य न्यायदर्शनस्य प्रतिपादयति ॥ अत्र च प्रतिपाद्यमानमभ्यर्हितत्वं न्यायस्य श्रौतार्थनिर्णयसहकारित्व-लक्षणगुणकृतं मन्तव्यम् ॥

आन्वीक्षकीशब्दान्वयश्च न्यायदर्शनस्य,

'आन्वीक्षकी दण्डनीतिस्तर्कविद्यार्थशास्त्रयोः' इत्यमरकोशेनावगम्यते ॥

अभ्यर्हितत्वाक्षेपश्च न्यायस्य क्वचिदभ्यर्हणीयमीमांसादिसहपाठात् ॥ यथा

(१) 'न्यायो मीमांसा धर्मशास्त्राणी'त्यात्मोपनिषदि, २. खण्डे ॥

(२) क्वचिच्च वेदादितुल्यं विद्यास्थानत्वेन परिगणनात् । यथा,

'पुराणन्यायमीमांसाधर्मशास्त्राङ्गमिश्रिताः ।
वेदास्स्थानानि विद्यानां धर्मस्य च चतुर्दश ॥' इति

याज्ञवल्क्यस्मृतौ प्रथमाध्याये तृतीयश्लोके,

'अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः ।
पुराणं धर्मशास्त्रञ्च विद्या ह्येताश्चतुर्दश ॥' इति

श्रीविष्णुपुराणे तृतीयांशे षष्ठाध्याये च ।

उपपादयंश्च भट्टजयन्तो न्यायमञ्जर्यां विद्यास्थानत्वं 'विद्यास्थानत्वं नाम चतुर्दशानां शास्त्राणां पुरुषार्थसाधनज्ञानोपायत्वमेवोच्यते । वेदनं विद्या तच्च न घटादिवेदनम् । अपि तु पुरुषार्थसाधनवेदनम् । विद्यायास्स्थानमाश्रय उपाय इत्यर्थः तच्च पुरुषार्थसाधनज्ञानोपायत्वं कस्यचित्साक्षात्कारेण । कस्यचिदुपायद्वारेणे'ति ग्रन्थेन प्रत्यपादयत्सकलविद्याप्रतिष्ठामूलेनाम्नायप्रामाण्यव्यवस्थापनेन न्यायदर्शनस्य विद्यास्थानत्वम् ॥ यथा,

'[१]न्यायविस्तरस्तु मूलस्तम्भभूतस्सर्वविद्यानाम् । वेदप्रामाण्यहेतुत्वात् । वेदेषु हि तार्किकरचितकुतर्कविप्लावितप्रामाण्येषु शिथिलितास्थाः कथमिव बहुवित्त-व्ययायाससाध्यं वेदार्थानुष्ठानमाद्रियेरन् साधवः । किं वा तदानीं स्वामिनि परिम्लाने

१. विजयनगर संस्कृत ग्रन्थमालामुद्रित न्यायमञ्जर्याः ३, ४ पृष्ठयोर्द्रष्टव्यम् ॥

तदनुयायिना मीमांसादिविद्यास्थानपरिजनेन कृत्यम्। तस्मादशेषदुष्टतर्कोपमर्दद्वारकदृढतरवेदप्रामाण्यप्रत्ययाधायि न्यायोपदेशक्षममक्षपादोपदिष्टमिदं न्यायविस्तराख्यं शास्त्रं प्रतिष्ठाननिबन्धनमिति पदं विद्यास्थान' मिति।

कैवल्यलक्षणपुरुषार्थसाधनज्ञानोपायस्य च न्यायस्य निरुक्तमभ्यर्हितत्वं सम्भवत्येव। इदञ्च वैशेषिकस्यापि समानं तस्यापि देहादिविलक्षणात्मस्वरूपनिरूपकत्वात्।

ननु कथन्तर्हि विद्यास्थाने वैशेषिकं तन्त्रं न परिगणितम्? । न्यायशेषत्वादेव। प्रधानस्यैव परिगण्यत्वाच्च ॥ युज्यत एवाम्नायप्रामाण्यसाधकमाप्तोक्तत्वहेतुं न्यायदर्शननिर्दिष्टमुपपादयतो वैशेषिकदर्शनस्य न्यायदर्शनशेषत्वम् ॥

[१]उपपादितञ्च न्यायमञ्जर्यां भट्टजयन्तेन विद्यास्थानेषु न्यायदर्शनमेव परिगणितमिति। यथा,

'तानीमानि चतुर्दश विद्यास्थानानीत्याचक्षते। यथोक्तम्।
पुराणतर्कमीमांसाधर्मशास्त्राङ्गमिश्रिताः।
वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश ॥ इति।

अन्यत्राऽप्युक्तम्।

अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः।
पुराणं धर्मशास्त्रञ्च विद्याह्येताश्चतुर्दश ॥ इति।

पूर्वत्र तर्कशब्देनोपात्तम्। अन्यत्र च न्यायविस्तरशब्देनैतदेव शास्त्र मुच्यते। न्यायस्तर्कोऽनुमानं सोऽस्मिन्नेव व्युत्पाद्यत इति। साङ्ख्यार्हतान् तावत् क्षपणकानां कीदृशमनुमानोपदेशकौशलम्। कियदेव तत्तर्केण वेदप्रामाण रक्ष्यत इति नासाविह गणनार्हः। बौद्धास्तु यद्यप्यनुमानमार्गावगाहनोद्धुरां कन्धर मुद्वहन्ति। तथाऽपि वेदविरुद्धत्वात्तर्कस्य तदीयस्य कथं वेदादिविद्यास्थानस्य म पाठः। अनुमानकौशलमपि कीदृशं शाक्यानामिति पदे पदे दर्शयिष्यामः। चाव कस्तु वराकः प्रतिक्षेप्तव्य एव। कः क्षुद्रतर्कस्य तदीयस्येह गणनावसरः। वैः

---

१. बिजयनगरसंस्कृतग्रन्थमालामुद्रितन्यायमञ्जर्यां ३. ४. पुटयोर्द्रष्टव्यम् ॥

षिकाः पुनरस्मदनुयायिन एवेत्येवं जनतासु प्रसिद्धायामपि षट्तर्क्यामिदमेव तर्क-न्यायविस्तरशब्दाभ्यां शास्त्रमुक्त' मिति ।

(३) क्वचिच्च श्रौतार्थनिर्णयसहकारित्वप्रतिपादनात् । यथा—

'आर्षं धर्मोपदेशञ्च वेदशास्त्राविरोधिना ।
यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः ॥' इति
मनुस्मृतौ ११ अध्याये १०६ श्लोके ॥

यद्यप्यत्र तर्कशब्दः प्रमाणानुग्राहकप्रसङ्गपरः प्रतीयते । अथापि [१]तादृशतर्कस्यास्मिन्नेव शास्त्रे व्युत्पादनान्निरुक्तशास्त्रेऽपि निरुक्तवचनस्य तात्पर्यं सम्भवत्येव ।

'तत्रोपनिषद' मित्त्यादिवचनान्तरैकार्थ्याच्च निरुक्तवचनस्यान्वीक्षकीशब्दितन्यायदर्शनपरत्वमवसीयते । अतो न्यायदर्शनस्य निरुक्तवचनावगम्यमानमभ्यर्हितत्वं सेत्स्यत्येव ॥

॥ **न्यायदर्शनस्यात्मविद्यात्वनिरूपणम्** ॥

(४) क्वचिच्चात्मविद्यायास्सत्या भगवदवतारोक्तत्वप्रतिपादनत् । **यथा**—

'षष्ठे अत्रेरपत्यत्वं वृतः प्राप्तोऽनसूयया ।
आन्वीक्षकीमलर्काय प्रह्लादादिभ्य ऊचिवान् ॥'

इति श्रीभागवते प्रथमस्कन्धे तृतीयाध्याये एकादशश्लोके ।

अत्र तावत् षष्ठेन भगवदवतारेणाऽत्रेरपत्येनाऽनसूयागर्भसम्भूतेनाऽन्वीक्षकीविद्या प्रह्लादादिभ्य उपदिष्टेति प्रतिपाद्यते । 'आन्वीक्षकीमध्यात्मविद्या'मिति वीरराघवीयव्याख्यानेन चान्वीक्षक्या अध्यात्मविद्यात्वरूपविशेषप्रतिपत्तिः । न चेय-

---

॥ १. **तर्कविद्यासमाख्याविषयनिरूपणम्** ॥

टि—अत्रेदं विभावनीयम् । प्रसङ्गलक्षणतर्कनिरूपकस्याऽपि गौतमतन्त्रस्याऽनुमान प्रमाणनिरूपकत्वनिबन्धन एव तर्कविद्यादिसमाख्यायोगः । साधारणेऽप्यसाधारण्ये प्रसङ्गानुमानयोः प्राधान्यस्य प्रमाणविश्रान्तत्वेन प्रमाणोपरक्तनाम्न एव साधीयस्त्वात् । प्रमाणाधीनप्रमितौ किञ्चित्कुर्वाणस्य सततस्सत्ताभाजस्तर्कस्य च प्रमाणपारार्थ्येनावस्थानादिति ॥

मान्वीक्षकी गौतमदर्शनादन्यैवेति वाच्यम्। गौतमदर्शनेतरान्वीक्षकीशब्दितदर्शनसद्भावे प्रमाणाभावात्। भावे वाऽविशेषितसाधारणसमाख्याबलसिद्धगौतमदर्शनविषयत्वस्याऽनपोद्यत्वात् ॥

अनादिकालप्रवृत्तायाश्च न्यायविद्याया अक्षपादेन सूत्रितत्वं भगवदवतारेण दत्तात्रेयेण प्रह्लादादिभ्य उपदिष्टत्वञ्च सम्भवत्येव।

अतो न्यायदर्शनस्य निरुक्तवचनावगतमभ्यर्हितत्वं साधीय एव। एतेन न्यायवार्तिकभूमिकायां ४३—४४. पुटयोः प्रतिपादितं आन्वीक्षकीद्वैविध्याभ्युपगमनिबन्धनमक्षपादीयस्य निरुक्तवचनाविषयत्वं निरस्तम्। भगवदवतारस्यैव न्यायदर्शनप्रतिपाद्यमानदेहादिविलक्षणात्मस्वरूपोपदेष्टृत्वसम्भवात्। निरीश्वरसाङ्ख्यप्रवर्तकत्ववत्। किञ्च

'त्रैविद्येभ्यस्त्रयीं विद्यां दण्डनीतिञ्च शाश्वतीम्।
आन्वीक्षकीञ्चात्मविद्यां वार्तारम्भांश्च लोकतः ॥'

इति (मनुस्मृतौ ७. अध्याये—४३. श्लोकः) मनुवचनं आन्वीक्षकीशब्दितस्य न्यायदर्शनस्यात्मविद्यात्वं स्पष्टमेव प्रतिपादयति ॥

'आत्मवेदनशीलत्वादन्वीक्षणपराथवा' इति (देवीपुराणे ४५. अध्याये) देवीपुराणीयान्वीक्षकीशब्दनिर्वचनेनाऽपि आन्वीक्षकीशब्दितस्य न्यायदर्शनस्यात्मविद्यात्वं शक्यावगमम् ॥ आत्मवेदनशीलत्वञ्च न्यायस्य पदार्थोद्देशसूत्रद्वितीयनिर्दिष्टप्रमेयस्वरूपविभजनपरेणात्मतदनुबन्धिनः प्रमेयत्वेन निर्दिशता सूत्रेणावगम्यते ॥

'तस्याः पृथक्प्रस्थानास्संशयादयः पदार्थाः। तेषां पृथक् वचनमन्तरेणाध्यात्मविद्यामात्रमियं स्या'दिति प्रथमसूत्रे भाषमाणो वात्स्यायनोऽपि न्यायदर्शनस्यात्मविद्यात्वं मनुते। तस्मात्सिद्धं न्यायदर्शनस्यात्मविद्यात्वम् ॥

आत्मविद्यात्वनिबन्धनञ्चाभ्य[१]र्हितत्वं वैशेषिकस्याप्यात्मनिरूपकस्य साधीय एव। उपपादयिष्यते च न्यायवैशेषिकयोरात्मनिरूपणैकमत्यं तयोः पौर्वापर्यनिरूपणे।

॥ इति न्यायदर्शनस्यात्मविद्यात्वनिरूपणम् ॥

---

१. इदञ्चाऽभ्यर्हितत्वं आस्तिकदर्शनत्वलक्षणं मन्तव्यम्। नास्तिका हि प्रबन्धारो न देहादिविलक्षणमात्मतत्वं स्वीये प्रबन्धे निरूपयन्तीति ॥

तदेवमुपादेयतममीमांसादिसहपाठाद्विद्यास्थानत्वेन परिगणनाच्छ्रौतार्थनिर्णयसहकारित्वादात्मविद्यात्वाच्च न्यायदर्शनस्याभ्यर्हितत्वं प्रतिपादितम् । अनेनेश्वरमनुपराशरपाराशर्य शुकब्रह्मयाज्ञवल्क्यादिप्रमातृपरिग्रहश्च प्रतिपादितो भवति ॥

ये पुनरपौरुषेयत्वं वेदानामामनन्ति । तेषामपि मतेन न्यायस्य मीमांसादि सहपठितस्याभ्यर्हितत्वं सेत्स्यत्येव । इदमेव न्यायस्य प्राशस्त्यं बलवदनिष्टाननुबन्धित्वरूपं यदभ्यर्हितत्वम् ॥

॥ इति न्यायदर्शनस्य प्रमाणप्रमातृविशेषपरिग्रहनिरूपणम् ॥

॥ अथ न्यायनिन्दाप्रतिपादकवचनाऽविरोधसमर्थनम् ॥

ननु न्यायशास्त्रस्य प्राशस्त्यं श्रुत्यादिभिरुपपादितं न सम्भवति । क्वचित्प्रमाणे निन्दाया अपि प्रतिपादनात् । यथा

'गोतम स्स्वेन तर्केण खण्डयंस्तत्र तत्र हि ।
शप्तोऽथ मुनिभिस्तत्र शार्गालीं योनिमृच्छति ॥'

इति स्कान्दकालिकाखण्डे सप्तदशाध्यायवचने ॥

'अहमासं पण्डितको हैतुको वेदनिन्दकः ।
आन्वीक्षकीं तर्कविद्यामनुरक्तो निरर्थिकाम् ॥ इत्यारभ्य
आक्रोष्टा चाऽतिवक्ता च ब्रह्मयज्ञेषु वै द्विजान् ।
यस्येयं फलनिष्पत्तिश्शृगालत्वं मम द्विज ॥'

इति महाभारते मोक्षधर्मे कश्यपेन्द्रसंवादे ।

'गोतमप्रोक्तशास्त्रार्थनिरतास्सर्व एव हि ।
शार्गालीं योनिमापन्ना स्सन्दिग्धा स्सर्वकर्मसु ॥'

इति गन्धर्वतन्त्रवचने च ।

अत्र किल न्यायशास्त्राऽनुरागिणस्सृगालयोनित्वप्रतिपादनाच्छृगालयोनि जनिसंपादकन्यायनिन्दाऽवगम्यते ॥ निन्दा नामाऽप्राशस्त्यं बलवदनिष्टानुबन्धित्वरूपम् । बलवदनिष्टानुबन्धित्वतदभावयोश्च विरोध एवेति चेत् ।

अत्र ब्रूमः । न्यायशास्त्रस्य तावच्छ्रौतार्थनिर्णयसहकारित्वं 'आर्ष'मित्यादि मानवीयवचनेन 'तत्रोपनिषद'मित्यादिमोक्षधर्मवचनेन चाऽवगम्यते । आत्यन्ति-

कनिन्दापरत्वे च निरुक्तवचनानां स्वीक्रियमाणे न्यायशकलस्याऽप्यनुपादेयताप्रसङ्गे श्रौतार्थनिर्णये न्यायसहकारवादो विरुद्ध एव स्यात् । अतस्तदविरोधेनैतेषामर्थनिश्च कार्यः ॥ तथाहि । न्यायशास्त्रस्य तावच्छ्रुत्यविरुद्धार्थे प्रमाणभावः । स्मृतित्वात तैस्तैर्महर्षिभिस्स्वयोगमहिमसाक्षात्कृताऽर्थतत्त्वैस्स्मृत्वा स्मृत्वा तं तमर्थं ग्रन्था प्रणयनाद्धि स्मृतित्वं तेषाम् । इदञ्चाऽक्षपादीयस्याऽपि समानम् । इयांस्तु विशेष आम्नायपूर्वभागोत्तरभागेष्वेव स्मृतिव्यपदेशभूमेति । सर्वासाञ्च स्मृतीनां श्रुत्यविरुद्ध प्रमाणभावः पूर्वमीमांसादर्शने स्मृतिपादे निरूपितः। अतो न्यायस्यापि श्रुत्यवि द्धार्थे प्रामाण्यं साधीय एव ।

तस्माच्छ्रुत्यविरुद्धार्थप्रतिपादकन्यायप्राशस्त्यपराणि न्यायप्राशस्त्यवचनानि श्रुत्यननुरोधिन्यायाप्राशस्त्यपराणि न्यायाप्राशस्त्यवचनानीति न किञ्चिदपहीनम्

स्याद्वा न्यायशास्त्रस्य प्राशस्त्यमप्राशस्त्यञ्च विनियोगपृथक्त्वात् । न्यायद प्रतिपाद्यो हि न्यायश्श्रुत्यविरुद्धार्थे श्रुतिविरुद्धार्थे च साधारणः। तत्र न्यायद नाधीनन्यायादिप्रतिपत्तिमान् पुमान् न्यायानुगृहीताभिश्श्रुतिभिरर्थं निश्चिन्वानो यसाय कल्पते। यस्तु पुमान् न्यायशास्त्रप्रतिपन्नन्यायमात्रेण श्रुतिपथमन न्धानेनार्थं निश्चिनोति । स पापाचरणाय भवतीति ।

न्यायप्राशस्त्याप्राशस्त्यवचनानि च निरुक्तार्थतात्पर्यकाण्येव । तत्र केव तर्काभ्यासनिरतस्य पुंसश्शृगालयोनिजनिमतो भाषणं कश्यपेन्द्रसंवादे । तत्र चान्व क्षकीशब्दितायास्तर्कविद्यायाश्श्रुत्यननुरोधनिबन्धनं नैरर्थक्यं प्रतिपाद्यते श्रुतिस कारिण्याश्चास्याश्श्रुत्यनुग्रहविरहे नैरर्थक्यमेव साधीय इति युक्तं केवलतर्कप निरुक्तवचनस्य । मोक्षधर्मगतश्रुतिसहकारप्रतिपादकवचनान्तरविरोधाच्च निरुक्तव नस्यान्वीक्षकीसामान्यपरत्वं न सम्भवति ।

एतद्वचनप्रतिपाद्यमानञ्चाक्रोशातिवादफलं शृगालयोनिजन्म केवलत भ्यासमूलमिति स्वतन्त्रतर्काभ्यासिनां शृगालयोनिजनिर्भवत्येव ।

एतेन न्यायवार्तिकभूमिकायाम् ४४, ४५. पुटयोः, ' शृगालयोनिजने क्रोशातिवादमात्रफलत्वमेव । तर्कविद्यापाठफलत्वे ' आक्रोष्टे'त्यादिश्लोकवैयर्थ्यप्र

ज्ञा'दिति प्रतिपादितं निरस्तम् । शृगालयोनिजनिफलाक्रोशाऽतिवादप्रयोजकस्वतन्त्र तर्काभ्यासस्य शृगालयोनिजनिप्रयोजकत्वोपपत्तेः । गन्धर्वतन्त्रवचनमपि स्वतन्त्रतर्कविषयम् । उक्तञ्च न्यायवार्तिकभूमिकायां 'गोतमप्रोक्ते'त्यादिवचनव्याख्यानावसरे 'शास्त्रान्तरव्यावृत्तिस्तु निपातेन व्यज्यते' इति ।

स्कान्दकालिकाखण्डसप्तदशाऽध्यायगतेन च

'पुनश्चाऽनुगृहीतोऽसौ श्रुतिसिद्धान्ततर्कतः ।
सर्वलोकोपकाराय तव शास्त्रं भविष्यति ॥' इति

उपरितनवचनेन श्रुत्यनुरोधितर्कप्रतिपादकस्य गौतमदर्शनस्योपादेयत्वमवगम्यते ।

अत एव न्यायदर्शनस्योपाङ्गेषु परिगणनमपि संभवति । साक्षात्परम्परया वा वैदिक्यामर्थप्रतिपत्तौ किञ्चित्कुर्वाणस्यैव वेदाङ्गत्वसम्भवात् । 'नाकिञ्चित्कुर्वतश्शेषत्व'मिति न्यायात् ॥ तस्माच्छ्रौतार्थनिर्णयसहकारिणो न्यायदर्शनस्य प्राशस्त्यं सम्भवत्येव ॥

॥ इति न्यायनिन्दाप्रतिपादकवचनाऽविरोधसमर्थनम् ॥

न्यायदर्शनप्राशस्त्यनिरूपणेन च न्यायस्यात्ममननसम्पादकतया निश्रेयसप्रयोजकत्वलक्षणस्स्वभावविशेषोऽवगम्यते । श्रौतार्थविचारशेषतयाऽध्येतव्यत्वलक्षणश्च । व्यपदिश्यते खलु न्यायाऽनध्येतृभिरधीयमानो वेदान्तोऽन्यायवेदान्त इति ।

'अक्षपादप्रणीते च काणादे सङ्ख्ययोगयोः ।
त्याज्यश्श्रुतिविरुद्धोंऽश श्श्रुत्यैकशरणैर्द्विजैः ॥
जैमिनीये च वैयासे विरुद्धांशो न कश्चन ।
श्रुत्या वेदार्थविज्ञाने श्रुतिपारं गतौ हि तौ ॥' इति

[1]पराशरोपपुराणवचनं च षड्दर्शन्यां श्रुतिविरुद्धार्थप्रतिपादकन्यायादेस्स्वतन्त्रोपादेयतां प्रतिक्षिपति ।

नच वेदविरुद्धार्थप्रतिपादकन्यायस्य वेदार्थनिर्णयसहकारवादो विरुद्ध एव

१. साङ्ख्यभाष्यभूमिकायां विज्ञानभिक्षुणोपात्तमिदं वचनम् ॥

स्यादिति वाच्यम्। वेदविरुद्धार्थप्रतिपादकस्यापि न्यायदर्शनस्याधीयमानस्याऽ तृबुद्धिवैशद्यसम्पादकतया वेदार्थनिर्णयसहकारित्वोपपत्तेः ॥

एतेन न्यायवर्तिकभूमिकायाम्, ४४. पुटे प्रतिपादितं न्यायप्राशस्त्यप्रति पादकप्रमाणविरोधान्निरुक्तपराशरोपपुराणवचनाप्रामाण्यं निरस्तं वेदितव्यन् ॥

न्यायवर्तिकभूमिकाकृतां पराशरोपपुराणवचनाप्रामाण्यप्रतिपादनं न्याय दर्शनेऽत्यादरनिबन्धनमिति च। अत एव न्यायवैशेषिकयोस्तामसत्वप्रतिपाद पाद्मवचनं प्रमाणं साङ्ख्यभाष्यभूमिकानिदिष्टं नोपात्तमपि। तदपि न्यायस स्वतन्त्रोपादेयतामेव प्रतिक्षिपति। न पुनश्श्रौतार्थनिर्णयशेषतयोपादेयतामिति कश्चिद्दोषः ॥

यत्तु विद्याभूषणेन 'अपरिग्रहाच्चाऽत्यन्तमनपेक्षा' इति ब्रह्ममीमांसासू न्यायदर्शननिन्दापरत्वेनोपात्तम्। तन्न समीचीनम्। निरुक्तसूत्रस्य वैशेषिकमतनि रासपराधिकरणपठितस्य वैशेषिकदर्शनपरत्वात्। तथा च श्रीभगवद्रामानुजभाष्य 'कापिलपक्षस्य श्रुतिन्यायविरोधपरित्यक्तस्यापि सत्कार्यवादादिना क्वचिदंशे वैदिकै परिग्रहोऽस्ति। अस्य तु काणादपक्षस्य केनाऽप्यंशेनापरिग्रहादनुपपन्नत्वाच्चाऽत्यन्त मनपेक्षैव निश्रेयसाऽर्थिभिः कार्ये'ति।

वैशेषिकस्य च निरुक्तसूत्रेणाऽत्यन्तोपेक्ष्यत्वेन प्रतिपादितस्यापि व्युत्पत्त्य दिफलायोपादानं साधीय एव।

नचेदं सूत्रं न्यायदर्शनविषयं भवितुमर्हति। न्यायदर्शनप्रमेयस्य प्रमाणाद्यश जातस्य वैदिकैः परिग्रहात्।

तस्मात्सिद्धं न्यायदर्शनस्य वेदार्थनिर्णयशेषतयोपादेयत्वम् ॥

॥ इति न्यायदर्शनप्राशस्त्य निरूपणम् ॥

## ॥ अथ न्यायदर्शनप्रणेतृपुरुषविशेष निरूपणम् ॥

उपपदितं न्यायदर्शनस्याऽभ्यर्हितत्वाम्। अथ तस्य प्रणेता निरूप्यते ॥

### ॥ न्यायदर्शनप्रणेतुर्नामानि ॥

न्यायशास्त्रावतारे तावद्भगवानक्षपादो न्यायदर्शनं प्रणिनायेति प्रतिपदितम् स च भूयस्स्वधिकरणेषु (१) अक्षपादः (२) अक्षचरणः (३) गोतम इत्यादिभि स्समाख्याभेदैर्व्यवह्रियते ॥

(१) अक्षपादसमाख्यया तावद्व्यवहारो [१]न्यायभाष्यवार्तिकतात्पर्यटीकान्यायमञ्जर्यादावुपलभ्यते ।

(२) अक्षचरणशब्देन च महाभारतनीलकण्ठीटीकादौ ॥

(३) गोतमनाम्ना च पाद्मोत्तरखण्डे, नैषधीयचरिते, सर्वदर्शनसङ्ग्रहे, विश्वनाथपञ्चाननभट्टाचार्यप्रणीतन्यायवृत्त्यन्तिमश्लोकादौ च ।

क्वचिन्न्यायवृत्त्यन्तिमश्लोके 'गौतम'निर्देशो दृश्यते । एतत्तत्त्वमग्रे व्यक्तीभविष्यति ।

## ॥ अक्षपादीयसमाख्योपपादनम् ॥

तत्राऽक्षपादसमाख्या तावत् न्यायदर्शनप्रणेतुर्वाचस्पत्ये बृहदभिधानेऽक्षपादशब्दनिर्वचन उपपादिता । यथा 'अक्षपादः अक्षं नेत्रं दर्शनसाधनतया जातं पादोऽस्य । न्यायसूत्रकारके गौतमे मुनौ । स हि स्वमतदूषकस्य व्यासस्य मुखदर्शनं चक्षुषा न कर्तव्यमिति प्रतिज्ञाय पश्चाद्व्यासेन प्रसादितः पादे नेत्रं प्रकाश्य तं दृष्टवानिति पौराणिकी [२]कथेति ।

अक्षपादश्च न्यायदर्शनप्रणेता न्यायशास्त्रेण पुरजितं वादे तोषयन् स्वप्रणीतस्य दर्शनस्य सकललोकोपकारकत्वं साधुत्वञ्च पुरजित्प्रसादकृतं सम्पादयन् नैयायिकवृन्दवन्द्यचरणयुगलो वरीवर्तीति न्यायमञ्जर्यामुपक्रमोपसंहारयोः प्रतिपादितं,

'जयन्ति पुरजिद्दत्तसाधुवादपवित्रिताः ।
निदानं न्यायरत्नानामक्षपादमुनेर्गिरः ॥'

'न्यायोद्धारगभीरनिर्मलगिरा गौरीपतिस्तोषितः ।
वादे येन किरीटिनेव समरे देवः किराताकृतिः ॥
प्राप्तोदारवरस्ततस्स जयति ज्ञानामृतप्रार्थना—
नाम्नाऽनेकमहर्षिमस्तकवलत्पादोऽक्षपादो मुनिः॥' इति ।

---

१. वचनानि तु न्यायवार्तिकभूमिकादावुपात्तानि तत्रैव द्रष्टव्यानि ।

२. न्यायवार्तिकभूमिकायाम्, २४. पुटे टिप्पण्यां त्वियं कथाऽन्यथा प्रतिपादिताऽनुसन्धेया ।

### ॥ न्यायदर्शनप्रणेतुर्मुनित्वप्रतिपादनम् ॥

न्यादर्शनप्रणेता तावत् मुनित्वेन मुनिप्रवरत्वेन ऋषित्वेन च व्यपदिश्यते। त

(१) मुनित्वेन व्यपदेशस्तावन्निरुक्तश्लोकयोरन्यत्र च बहुलम् ।

(२) मुनिप्रवरत्वेन च न्यायवार्तिकविश्वनाथवृत्त्यादौ ।

(३) ऋषित्वेन च न्यायभाष्यादौ ॥

अत्र च प्रतिपाद्यमानमृषित्वं तपःप्रभावसमासादितन्यायादिपदार्थतत्त्वसाक्षात्कारलक्षणं मन्तव्यम् । न्यायदर्शनप्रणेतुः ऋषित्वोपपादनाच्च न्यायशास्त्रस्य ऋषिप्रवर्तितत्वलक्षणमभ्यर्हितत्वं सिद्धमिति ।

## ॥ गोतमचरितम् ॥

### ॥ श्रुतिषु गोतमप्रस्तावः ॥

श्रुतिषु तावद्गोतमस्स्वशब्दात्कचित्कचिच्च स्वीयशब्दात्प्रतिपाद्यते । त स्वशब्देन निर्देशः पूर्वभागेषु बहुलमुपलभ्यते । यथा,

(१) [१]ऋक्संहितायां, १ अष्टके—५. अध्याये, ६२. सूक्ते ।

(२) अथर्वसंहितायां, ४. काण्डे, ६. अनुवाके । १८. काण्डे, अनुवाके च ॥

(३) माध्यन्दिनीये शतपथब्राह्मणे, १. काण्डे, ४. अध्याये ।

(४) ऋक्संहिताभाष्ये, १. अष्टके, ५. अध्याये, २१. वर्गे च ।

तत्र माध्यन्दिनीये शतपथब्राह्मणे विदेहराजपुरोहितः रहूगणर्षेरपत्यं गोतमनामा प्रतिपाद्यते । ऋक्संहिताभाष्ये च राहूगणो गोतमस्सूक्तद्रष्टृत्वेन प्रतिपाद्य

गौतमशब्दश्च गोतमगोत्रापत्यवाची उपनिषत्सु बहुलं श्रूयते । यथा —

(१) च्छान्दोग्ये ४ प्रपाठके ४ खण्डे । ५ प्रपाठके तृतीयादिखण्डेषु च

(२) बृहदारण्यके ४ अध्याये. ६ ब्राह्मणे । ५ अध्याये, ७ ब्राह्मणे च

अत्र च्छान्दोग्य चतुर्थप्रपाठकचतुर्थखण्डगतवचनव्याख्याने श्रीमद्रङ्गरामानुजीये,

१. वचनानि न्यायवर्तिकभूमिकायामुपात्तानि द्रष्टव्यानि ॥

'अथ स सत्यकामः हरिद्रुमत्पुत्रं गोत्रतो गौतममेत्योक्तवानि'ति, बृहदारण्यकपञ्चमाऽध्यायसप्तमब्राह्मणगतवचनभाष्ये च श्रीशङ्करभगवत्पादप्रणीते 'गौतमेति गोत्रत' इति च प्रतिपाद्यते ।

अत्र च प्रतिपाद्यमान आम्नायपूर्वोत्तरभागयोर्गौतमगौतमनिर्देशभूमा तयोः पौर्वापर्यनियामको बोध्यः । आम्नायोत्पत्तिवादिनाञ्चानुकूल इव । इति ।

॥ गोतमद्वयम् ॥

श्रुत्या तावद्गोतमद्वयं प्रतीयते । शतपथब्राह्मणादिनिर्दिष्टो राहूगणो गोतम एकः । गौतमशब्दनिर्वचनसिद्धपूर्वभावो गोत्रप्रवर्तकश्चाऽपर इति । तत्र सन्दिह्यते । किं गोत्रप्रवर्तको राहूगणश्च गोतमो भिन्न उताऽभिन्न इति । भिन्नत्वे च किं गोत्रप्रवर्तक एव गोतमो न्यायदर्शनं प्रणिनाय आहोस्विद्राहूगणो गोतम इति च ।

॥ न्यायदर्शनप्रणेतृविषये पूर्वः पक्षः ॥

अत्र [१]केचित् मन्यन्ते । [२]शतपथब्राह्मणादिनिर्दिष्टो विदेहराजपुरोहितो राहूगणर्षेरपत्यं गोतम एव न्यायदर्शनप्रणेता । [३]तस्यैव वैदिकसूक्तद्रष्टुर्विदेहराजपुरोहितस्य न्यायदर्शनप्रणेतृत्वसम्भवात् । अयमेव गोतमो गोत्रप्रवर्तको न्यायदर्शनप्रबन्धप्रतिपादकगोत्रमूलपुरुषप्रतिपादनस्वरसगोतमपदघटितवचनप्रतिपाद्यो भवितुमर्हति । [४]नच गोतमान्तरेणैव कृतमर्वाचीनमिदं न्यायदर्शनमिति वाच्यम् । अधिगतश्रौतनिर्देशस्याऽतिचिरकालावस्थायिनो न्यायदर्शनस्य मूलपुरुषप्रणीतत्वस्यैव सम्भवात् । [५]अयञ्च गोतमो जनकपुरोहितस्य शतानन्दस्य पिता मिथिलादेशे न्यायदर्शनं प्रणिनायेति ।

---

१. केचित् न्यायवार्तिकभूमिकाकारप्रभृतयः ।

२. न्यायवार्तिकभूमिकायां २१ पुटे द्रष्टव्यम् । तत्र न्यायदर्शनप्रणेतू राहूगणगोतमस्य च्छान्दोग्यादिप्रतिपादितत्वप्रतिपादनाच्छान्दोग्यादौ च गोतमस्य गोत्रप्रवर्तकस्य प्रतिपादनाद्राहूगणगोतमस्यैव गोत्रप्रवर्तकत्वं न्यायवार्तिकभूमिकाकृदभिमतमिति प्रतीयते ।

३. न्यायवार्तिकभूमिकायां २२ पुटे टिप्पण्यां द्रष्टव्यम् ।

४. न्यायवार्तिकभूमिकायां २०–२१ पुटयोर्द्रष्टव्यम् ।

५. न्यायवार्तिकभूमिकायां २३ पुटे द्रष्टव्यम् ।

## ॥ न्यायदर्शनप्रणेतृविषये सिद्धान्तपक्षः ॥

गोतमगोत्रापत्यं गोतमनामा महर्षिर्मिथिलादेशे न्यायदर्शनं प्रणिनायेति वयं प्रतीमः । तथाहिः—वाचस्पत्ये बृहदभिधानेऽक्षपादशब्दनिर्वचने *गौ शब्देन गोतमगोत्रापत्यत्वेन प्रतिपादितस्य न्यायदर्शनप्रणेतुर्गोतमसमाख्यायोगे

'न्यायः—गोतमप्रणीतषोडशपदार्थनिरूपके शास्त्रभेदे' इति न्याय निर्वचनादवगम्यते ॥

न्यायदर्शनप्रणेतैव विदेहपुरोहितत्वेन शतपथब्राह्मणादिप्रतिपन्न उतान शतानन्दपितृत्वेन श्रीरामायणादिप्रतिपाद्यमान एव न्यायदर्शनं प्रणिनाय उता राहूगणगोतम एव शतानन्दपिता उतान्य इत्यादिकं तु दुर्निश्चेयं भवति ।

---

### *॥ अपत्यार्थकप्रत्ययविशेषाऽर्थे निरूपणम् ॥

टि—अत्रेदमवधेयम् । ननु गौतमशब्दस्तावत् 'ऋष्यन्धकवृष्णिकुरुभ्यश्च' (अष्टाध्यायी—४—१—११४) सूत्रविहिताण् प्रत्ययान्तः । अपत्यार्थकप्रत्यये तन्निरूपितजन्यत्ववद्रूपतत्पुत्राभिधानेऽपि तदीयगोत्रापत्याभिधानमनुपपन्नम् । क्तसूत्रस्य च गोत्रापत्याऽविषयता निरुक्तसूत्रपूर्वतने 'शिवादिभ्योऽणि'ति (अ १—११२) सूत्र एव गोत्राधिकारनिवृत्तिवचनादवगम्यते । नच 'अत्रिभृगुकु वसिष्ठगौतमाङ्गिरोभ्यश्चे'ति (अष्टा—२—४—६५) सूत्रविषयत्वाद्गोत्रापत्यार्थ मुपपद्यत इति वाच्यम् । तत्सूत्रस्य गोत्रापत्यकृतबहुत्वविवक्षास्थल एव प्रवृ अत एकवचनान्तगौतमशब्दस्य गोत्रापत्यार्थकत्वमनुपपन्नम् । 'गौतमेति गो इति शाङ्करभाष्याद्यसङ्गतिश्चेति चेत् । सत्यम् । अथाऽप्यपत्यसामान्यार्थी ताण् प्रत्ययान्तस्यैव गौतमशब्दस्य गोतमगोत्रापत्यवाचित्वमपि स एव । साक्षात्परम्परासाधारणनिरूपितत्वस्यैवापत्यार्थघटकत्वात् । न चैवं गोत्रापत्यार्थकप्रत्ययेन पर्यायत्वं प्रसज्यते । समानेऽपि पौत्रादिवाचकत्वे गोत्रप्र मुख्यविषयस्य पुत्रस्यैवापत्यप्रत्ययप्रधानप्रतिपाद्यत्वात् । न चैतावता गोत्रप्रत्यया नवैयर्थ्यम् । विशेषधर्मावच्छिन्नबोधनाय तदावश्यकत्वात् । स्याद्वा गोत्रापत्य पत्यत्वविवक्षयाऽपत्यप्रत्ययबोध्यत्वमिति । इति ॥

अथापि मिथिलोपकण्ठे शतानन्दपित्राश्रमस्य श्रीरामायणेन सत्तावगमाच्छतानन्दपितुर्गौतमनाम्नो मिथिलावितत्प्रचारन्यायदर्शनप्रणेतृत्वं शक्यमनुमातुम् ॥

यद्यपि विदेहपुरोहितत्वेन शतपथब्राह्मणादिप्रतिपन्नो राहूगणो गोतमो जनकपुरोहितस्य शतानन्दस्य पिता भवितुमर्हति । 'गौतमश्च शतानन्दो जनकानां पुरोहित' इत्युत्तररामचरितश्लोकव्याख्याने 'गौतमो गोतमस्य महर्षेरपत्यं पुमा'निति दर्शनेन शतानन्दपितुर्गोतमसमाख्यावगमात् । राहूगणगोतमस्य च नामैक्यनिबन्धनप्रत्यभिज्ञया तदैक्यसिद्धेस्संभवात् ॥ अथापि न शतानन्दपितृत्वं तस्य निश्चेतुं शक्यते । भेदाभेदसाधारण्यात् नामधेयस्य ॥

**॥ राहूगणगोतमस्य गौतमत्वसमर्थनम् ॥**

सम्भावितशतानन्दपितृभावस्य च राहूगणगोतमस्य न्यायदर्शनप्रणेतुर्गौतमत्वमवर्जनीयमापतति ।

'तस्य तद्वचनं श्रुत्वा विश्वामित्रस्य धीमतः ।
हृष्टरोमा महातेजाश्शतानन्दो महातपाः ॥
गौतमस्य सुतो ज्येष्ठस्तपसा द्योतितप्रभः ।
रामसन्दर्शनादेव परं विस्मयमागतः॥' इति

श्रीमद्वाल्मीकिरामायणश्लोकाभ्यां शतानन्दपितुर्गौतमत्वप्रतिपादनात् ॥

नच शतानन्दपितुर्गौतमत्वे तस्य गोतमत्वमुत्तररामचरितव्याख्यानप्रतिपन्नमनुपपन्नं स्यादिति वाच्यम् । गौतमस्यापि सतस्तस्य गोतमसमाख्यासमावेशाविरोधात् । कुर्वन्ति हि पितरस्स्वपित्रादिनाम स्वतनयानां पित्रादिष्वादरातिशयाद्वंशाविस्मरणाय चेति ।

स्याद्वोत्तररामचरितव्याख्यानस्य गोतमापत्यतामात्रप्रतिपादकस्य शतानन्दे गोतमगोत्रापत्यतापरत्वम् । अतश्शतानन्दपितुर्गौतमत्वमुपपद्यत एव ॥

**॥ राहूगणगोतमस्य वर्गप्रधानताव्यवस्थापनम् ॥**

किञ्च, गोत्रप्रवरनिरूपकग्रन्थेषु तावद्गोतमगणे दशसु वर्गेषु राहूगणत्वेन कश्चन वर्गो निर्दिष्टः । अतो राहूगणस्य वर्गप्रधानत्वं साधीय एव । परन्तु वर्गदशकमूलपुरुषदशकस्य गोतमसमाख्यैकपुरुषमूलत्वं स्यादिति सम्भाव्यते ।

'जमदग्निर्भरद्वाजो विश्वामित्राऽत्रिगोतमाः ।
वसिष्ठकश्यपागस्त्या मुनयो गोत्रकारिणः ॥' इति

मानवीयवचनेनैकस्यैव गोतमस्य गोत्रप्रवर्तकत्वाऽवगमात् ॥ अतश्च राहूगणगोतमस्य गौतमत्वं साधीय एव ।

॥ इति राहूगणगोतमस्य वर्गप्रधानताप्रतिपादम् ॥

एतेन राहूगणगोतमस्य न्यायदर्शनप्रणेतृत्वेनाभिमतस्य मूलपुरुषत्वसाधनं न्यायवार्तिकभूमिकाकृतामनुपपन्नं स्वनिरूपणविरुद्धं चेति मन्तव्यम् । श्रीरामायणे मिथिलाभूमौ जनकपुरोपकण्ठे गौतमाश्रमावस्थानप्रतिपादनात् मिथिलादेशे न्यायदर्शनप्रणयनप्रतिपादनं सम्भवत्येवेति हि न्यायवार्तिकभूमिकायाम् २३. पुटे प्रतिपादितम् । तच्च विरुद्ध्यते न्यायस्य मूलपुरुषप्रणीतत्वे । गौतमाश्रमवास्तव्यस्य न्यायदर्शनप्रणेतुर्गौतमत्वनियमादिति ।

॥ इति राहूगणगोतमस्य गौतमत्वसमर्थनम् ॥

यच्चोक्तं न्यायदर्शनप्रणेतृनिर्देशकेषु प्रमाणेषु श्रूयमाणस्य निरुपपदस्य गोतम शब्दस्य मूलपुरुषप्रतिपादनस्वरसत्वान्मूलपुरुषस्यैव न्यायदर्शनप्रणेतृत्वमिति न्यायदर्शनप्रणेतृसम्बन्धिनो गौतमशब्दाः प्रामादिका एवेति । तन्न समीचीनम् । बहुप्रमाणसिद्धगौतमत्वबाधकत्वायोगाद्गोतमशब्दस्य । धर्मिभूतपदस्वरूपत्यागात्पदधर्मस्वारस्यत्यागमात्रस्य ज्यायस्त्वाच्च ।

एतेन 'गौतमसूत्रवृत्ति'रिति पाठस्याप्रामादिकत्वकल्पनया न्यायदर्शनस्य मूलपुरुषप्रणीतत्वं सेत्स्यतीत्यपि न्यायवार्तिकभूमिकाकृतां मनोरथमात्रं मन्तव्यम् ।

यत्पुनरश्रौतनिर्देशभाजो न्यायदर्शनस्य गोत्रमूलपुरुषप्रणीतत्वमेव सम्भवतीति प्रतिपादितम् । तदपि न सहृदयहृदयङ्गमं भवति ॥ मूलपुरुषप्रणयनवादेप्यनादिनिधनाविच्छिन्नसंप्रदायाम्नायनिर्देशोपपादनस्यायोगात् । योगे वा न्यायदर्शनस्य गौतम प्रणीतत्वस्यैव सम्भवाच्च ॥

वस्तुतो न्यायनिर्देशपराश्श्रुतयोऽनादिसिद्धन्यायविद्यापरा एव । तद्विस्तररूपत्वाच्च न्यायदर्शनस्यापि श्रौतनिर्देशनिबन्धनाभ्यर्हितत्वं साधीय एवेति न किञ्चिदवहीनम् ॥

अतस्सिद्धं गोतमगोत्रस्य गोतममहर्षेर्न्यायदर्शनप्रणेतृत्वम् ॥

॥ इति न्यायदर्शनप्रणेतृविषये सिद्धान्तपक्षः ॥

॥ इति गोतमचरितम् ॥

॥ इति न्यायदर्शनप्रणेतृपुरुषविशेष निरूपणम् ॥

**॥ आन्वीक्षक्याः पञ्चाध्यायीत्वसमर्थनम् ॥**

अक्षपादप्रणीतञ्चान्वीक्षकीशब्दितं न्यायदर्शनं आह्निकद्वयघटिताध्याय-पञ्चकात्मकमुपलभ्यते। युक्तमेव सपरिकरप्रमाणनिरूकस्य निश्रेयसोपयोगिनोऽस्य पञ्चाध्यायीत्वम् ॥

अत्र विद्याभूषणो मन्यते। प्रमाणादिषोडशपदार्थलक्षणप्रतिपादकस्य न्याय-दर्शनप्रथमाध्यायमात्रस्याऽक्षपादप्रणीतत्वं स्यात्। बौद्धवैशेषिकयोगमीमांसादर्शन-प्रमेयपरीक्षकाश्च द्वितीयतृतीयतुरीयाध्याया विभिन्नकाले विभिन्नकर्तृका भवितुमर्ह-न्ति। जातिनिग्रहस्थानविभागनिरूपकस्य पञ्चमाध्यायस्य पुनर्न गौतमप्रणीतत्वम्। न हि प्रमाणादिपदार्थान् विभज्य प्रथमाध्याय एव निरूपयन्नक्षपादो जातिनिग्रह-स्स्थानयोस्स्वरूपं तद्बहुत्वञ्च तत्रैव प्रतिपादयन् जातिनिग्रहस्थानविभागनिरूपकं पञ्चमाध्यायं प्रणीतवानिति संभवतीति ॥

अत्र ब्रूमः। सपरिकरप्रमाणनिरूपकत्वं तावन्न्यायदर्शनस्य प्रमाणोपक्रमस्य पदार्थोद्देशसूत्रेणाऽवगम्यते। निरूपणं च प्रमाणस्य लक्षणविभागोपपत्त्यादिचिन्तन-मेव। तच्च न प्रथमाध्यायमात्रेण निर्व्यूढम्। विभक्तानां लक्षणप्रतिपादनमात्रविश्रा-न्तत्वात् तस्य। अतः प्रथमाध्यायमात्रस्याऽक्षपादप्रणीतत्वं न साधीयः ॥

किञ्च, संशयादिपरिकरोपेतं प्रमाणं निरूपयंस्तावदक्षपादस्स्वं दर्शनं मुमुक्षू पादेयं चिकीर्षन् द्वादशविधं प्रमेयं न्यरूपयत्स्वीये दर्शने। तेन च निश्रेयसाभिष्वङ्गं स्वीयदर्शनस्य भावयन्मुमुक्षूपादेयतां तस्य मनुने। प्रत्यगादयच्च प्रेक्षावदुपादेयत्वाय स्वीयग्रन्थस्याऽऽत्मादिप्रमेयनिरूपकत्वं तज्जन्यविज्ञानस्य च मिथ्याज्ञानादिनिबर्हण-द्वारा निश्रेयससाधकत्वेन तस्य निश्रेयसाभिष्वङ्गं च।

'प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णयवादजल्पवितण्डा-हेत्वाभासच्छलजातिनिग्रहस्थानानां [१]तत्वज्ञानान्निश्रेयसाधिगमः'

---

१.सूत्रघटकस्तत्वज्ञानशब्दः करणसाधनो दर्शनपरो द्रष्टव्यः। प्रतिपादितञ्चैतत्तात्पर्यटीकायाम्॥

'दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्ग' इति न्यायोपक्रमस्थसूत्राभ्याम् ॥

तत्र तावन्निश्रेयसाऽभिष्वङ्गोऽस्य दर्शनस्याऽऽत्ममननसंपादकतयैव संभवति। श्रवणस्य श्रुतिकारितत्वात्पुरुषकारितत्वाच्च निदिध्यासनस्य। मननञ्च देहादिविलक्षणतया श्रुतस्याऽऽत्मनो युक्तिभिरनुचिन्तनलक्षणं तृतीयचतुर्थाध्यायसाध्यमेव ॥ आत्मलक्षणनिर्देशकस्य प्रथमाध्यायस्यात्मश्रवणपर्यवसायित्वात्। अतो न्यायदर्शनप्रथमाध्यायमात्रस्याक्षपादप्रणयनवादोऽनुपपन्नः ॥

नच न्यायदर्शनाद्यसूत्रद्वयस्य पश्चादुपरितनाध्यायप्रणेतृभिस्संयोजितत्वात् नानुपपत्तिरिति वाच्यम्। तथासति प्रेक्षावत्प्रवृत्त्यङ्गानुबन्धिचतुष्टयाप्रतिपादनेन प्रेक्षावदप्रवृत्तौ प्रेक्षावत्प्रमित्युत्पादनेन सफलजन्मनश्शास्त्रस्य प्रयोजनापर्यवसानेनानारम्भणीयत्वापातात् ॥ आत्मादिद्वादशविधप्रमेयप्रतिपादनस्यालम्बकत्वापत्तेश्च ॥

नच प्रमाणपरिकरत्वादात्मादेस्तन्निरूपणं प्रमाणशास्त्रे साधीय एवेति वाच्यम्। अथाऽपि द्वादशविधप्रमेयस्य प्रमाणपरिकरताविरहेण तद्दोषतादवस्थ्यात्। यथाकथञ्चित्प्रमाणपरिकरत्वोपपादने च तादृशप्रमाणपरिकरभावस्य तन्त्रान्तरप्रमेयसाधारण्येन तेषामपि निरूपणप्रसङ्गाच्च ॥

यद्यात्मादेरेव निश्रेयसोपयोगितया तावन्मात्रनिरूपणमिष्यते। साधीय एवैतत्।

'अस्त्यन्यदपि [१]द्रव्यगुणकर्मसामान्यविशेषसमवायाः प्रमेयम्। तद्भेदेन चापरिसङ्ख्येयम्। अस्य तु तत्वज्ञानादपवर्गो मिथ्याज्ञानात्संसार इत्यत एतदुपदिष्टं विशेषेणे'ति प्रमेयोद्देशसूत्रे भाषमाणो हि वात्स्यायनो निश्रेयसोपयोगिनमात्मादिप्रमेयनिरूपणं न्याये मनुत इति। तद्व्यायातमान्वीक्षक्या अध्यात्मविद्यात्वेन। तथात्वे च प्रथमाध्यायमात्रत्वानुपपत्तिः प्रपञ्चिता।

आत्मादिद्वादशविधप्रमेयप्रतिपादकानां प्रथमाध्यायगतानां सूत्राणां पश्चा-

१. अत्रेदं बोध्यम्। न्यायभाष्यप्रतिपाद्यमानं च द्रव्यादि वैशेषिकप्रमेयजातं स्वनिरूपकस्य वैशेषिकदर्शनस्य न्यायभाष्यप्राक्तनत्वमवगमयति। न्यायभाष्यप्राक्तनत्वोपपादनेनैव तद्व्याख्यानेभ्यः पूर्वत्वमर्थसामर्थ्यात्सेत्स्यतीति ॥

तत्नैस्संयोजितत्वाऽभ्युपगमे च । सत्यम् । नेदमक्षपादीयं न्यायदर्शनम् । तस्यात्मविद्यात्वस्य प्रमाणेषु प्रतिपादनात् । किन्नाम? । स्वमतिविलसितं दर्शनान्तरमेवेति ।

यत्पुनः बौद्धवैशेषिकयोगमीमांसादर्शनप्रमेयनिरूपकाणां न्यायद्वितीयतृतीयतुरीयाध्यायानां पश्चात्तनैरेव प्रणीतत्वं सम्भवतीति प्रतिपादितम् । तत्र पृच्छामः । किं बौद्धाद्यागमप्रमेयस्य पूर्वमसतः प्रतिपादनस्या क्षपादकर्तृकत्वायोगादर्वाचीनकर्तृकत्वमास्थीयते । आहोस्विदेकस्यैव पुरुषस्य तावदर्थनिरूपणसामर्थ्याभावादिति ।

प्रथमे सत्यादय एव मानम् । अनादिकालप्रवृत्तानामेवार्थविशेषाणां निबन्धकारैः परिग्रहात् । द्वितीये चासिद्धिः । एकस्यैव पुरुषस्य योगमहिमसाक्षात्कृतार्थतत्वस्य तावदर्थनिरूपणसामर्थ्यसंभवात् ।

अक्षपादस्य च यौक्तिकतल्लजत्वं न्यायभाष्यान्तिमश्लोकेन प्रतिपाद्यत इति युक्तं तस्य प्रमाणप्रमेयपरीक्षकद्वितीयतृतीयचतुर्थाध्यायप्रणेतृत्वम् ॥

माध्यमिकसूत्रादिबौद्धग्रन्थसंवादश्च न्यायदर्शने परिदृश्यमान आम्नायसाधारण इति न ततोऽपि उपरितनाध्यायानां पश्चात्तनैः प्रणीतत्वं शक्यनिर्णयम ।

'तद्विकल्पाज्जातिनिग्रहस्थानबहुत्व'मिति न्यायप्रथमाध्यायान्तिमसूत्रप्रतिपादितजातिनिग्रहस्थानबहुत्वनिरूपकस्य च पञ्चमाध्यायस्य सुतरामक्षपादप्रणीतत्वं सम्भवति ।

पदार्थोद्देशसूत्रे चरमनिर्दिष्टे जातिनिग्रहस्थानेलक्षयंस्तद्बहुत्वञ्च प्रतिपादयन् बहुत्वनिरूपणेन च शास्त्रमुपसंहरिष्यन्नक्षपादो न प्रथमाध्याय एव जातिनिग्रहस्थाने विभिनक्तीति न किञ्चिदपहीनम् ॥

तस्माद्युक्तं पञ्चाध्याय्या अक्षपादप्रणीतत्वम् ॥

॥ इत्यान्वीक्षक्याः पञ्चाध्यायीत्वसमर्थनम् ॥

॥ इति तर्कशास्त्रनिरूपणे न्यायदर्शननिरूपणं नाम द्वितीयोल्लासः ॥

# ॥ तर्कशास्त्र निरूपणम् ॥

## ३. वैशेषिकदर्शन निरूपणम् ॥

### ॥ वैशेषिकदर्शनावतरणप्रतिपादनम् ॥

वेदान्तेषु तावन्निश्रेयससाधनमात्मतत्वज्ञानं प्रतिपाद्यते '[१]आत्मा वा अरे द्रष्टव्यश्श्रोतव्यो मन्तव्यो निदिध्यासितव्य' इत्यादिवाक्यैः। ज्ञेयश्चात्मा जीवपरभेदभिन्नः। तद्विषयञ्च ज्ञानं निश्रेयससाधनं वैलक्षण्यविषयमिति 'द्वे ब्रह्मणी वेदितव्ये' भोक्ता भोग्यं प्रेरितारञ्च मत्वा' [२]पृथगात्मनं प्रेरितारञ्च मत्वा जुष्टस्ततस्तेनाऽमृतत्वमेती'त्यादिवचनप्रतिपन्नम् ॥

देहात्मभ्रमादिलक्षणमिथ्याज्ञानमूलबन्धात्यन्तिकनिवृत्तिरूपनिश्रेयससाधनज्ञानविषयश्च ज्ञातृवैलक्षण्यं परमार्थ इति वस्तुगतिः।

सत्यामेवंविधायां वस्तुगतौ भगवन्नियमनपरतन्त्रा बृहस्पतिप्रभृतय आसुरप्रकृतिमोहनायागमाप्रामाण्यशरीरचैतन्यादिवादान् प्रावर्तयन्। तेषु च वादेष्वभिनिविष्टचेतसो वेदवैदिकविमतिशालिनो नास्तिकाः कथ्यन्ते। सर्वेऽपि ते विलक्षणात्मविद्वेषिणश्शरीरचैतन्यादिवादानातिष्ठन्ते। तत्र,

शरीरात्मवादो यथा। कल्पनाधीनात्मसिद्धिवादे कल्पकाभिमतस्य ज्ञानादेर्भूतपरिणतिभेदविश्रान्तस्य न विलक्षणात्मकल्पनापटुता। इति भूतचैतन्यमेव समाश्रयणीयम्। कल्पकस्यासाधारणलिङ्गार्थसिद्धिवादे कल्पतातिरेकिसिद्धिदौर्घट्यात्। प्रकृते शरीरतदितरसाधारणज्ञानलिङ्गात्मसिद्धिवादे शरीरातिरेकिसिद्ध्यनुपपत्तेः। किञ्च विलक्षणात्मवादिभिरपि ज्ञानाद्युत्पत्त्यवच्छेदकदेशत्वं शरीरस्य स्वीकरणीयम्। अन्यथा विलक्षणात्मनो नित्यत्वाद्विभुत्वाच्च सर्वत्र ज्ञानादिकं जायेतेति प्रसङ्गे निरुत्तरत्वापातात्। अतस्तस्यैव शरीरस्य सर्वमतसिद्धस्य ज्ञातृत्वमपि स्वीक्रियताम्। किं विलक्षणात्मकल्पनयेति ॥

ननु शरीरचैतन्यवादे मृतदेहस्यापि चैतन्यं प्रसज्यते। यदि सप्राणस्यैव शरीरस्य चैतन्यं स्वीक्रियते। ततो वरं प्राणस्यैवात्मत्वमिति प्राणात्मवादः।

---

१. बृहदारण्यके, ६. ब्राह्मणे, ५. अध्याये, ६.

२. ३. श्वेताश्वतरे, १. अध्याये, १२–६.

न तावच्छरीरस्य सप्राणस्यात्मत्वं सुवचम्। शरीरप्राणयोर्भावेऽपि चक्षुरादीन्द्रियविरहे चाक्षुषाद्यनुदयात्। अत इन्द्रियाणामेवात्मत्वं युक्तमितीन्द्रियात्मवादः।

तमिममपरे न बहुमन्वते। न तावद्बहूनामिन्द्रियाणामात्मत्वं सम्भवति। 'योऽहं घटमद्राक्षं सोऽहमिदानीं स्पृशामी'त्यबाधितप्रत्यभिज्ञाविरोधात्। अनया खलु प्रत्यभिज्ञया चाक्षुषस्पार्शनाश्रय एकोऽवगाह्यते। इन्द्रियात्मवादिनो हि चाक्षुषाश्रयत्वं चक्षुषः स्पार्शनाश्रयत्वं त्वच इत्येवमादि स्वीकुर्वन्ति। अतस्तन्मते प्रत्यभिज्ञाविषयत्वमनुपपन्नमेव स्यादात्मनः। अन्येनानुभूतस्यान्येन प्रत्यभिज्ञाप्यनुपपन्ना। चैत्रेणानुभूतस्य मैत्रेणानवमर्शनात्। अत एकमेव किञ्चित् नित्यमात्मवस्त्वेषितव्यम्। येन प्रत्यभिज्ञोपपद्येत। नच चक्षुरादिकं प्रत्येकमेवात्मा भवितुमर्हति। रसादिग्रहणासामर्थ्यादिति।

अतस्सर्वग्रहणचतुरं किञ्चिदास्थेयम्। तदेव मनः। मनसश्च ज्ञानान्तरङ्गताप्रकर्षोऽवसीयते। तस्य विषयग्रहणप्रवृत्तिदशायां ज्ञानोत्पाददर्शनात्। विषयपराङ्मुखतादशायां ज्ञानानुत्पाददर्शनाच्च। यथा, सत्यपि विषयेन्द्रियसम्प्रयोगे ज्ञानानुत्पादो व्यासङ्गस्थले। एकस्मिन् विषये व्यासक्तमानसो हि पुमान् पार्श्वस्थमपि न पश्यति। प्रतिबोधितोऽपि न प्रतिपद्यते। किन्नाम?। अपि भवान् मम पुरतोऽवस्थितो मया तु न दृष्ट इत्येव वदति। इति। अतश्च मनसो ज्ञानान्तरङ्गस्य ज्ञातृत्वमपि साधीय इति मन आत्मवादः।

एवमात्मविषये वादबहुत्वमुपपादितम्। वादबहुत्वे च सत्यात्मतत्वमनिर्णीतं भवति।

ननु मन आत्मवादिना मनस आत्मत्वोपपादनात् मन एवात्मेति स्यात्। न स्यात। मन आत्मवादेऽपि दोषस्य जागरूकत्वात्। यथा—आत्मा तावन्मानसप्रत्यक्षगोचर इति सर्वानुभवसिद्धम्। नच मनस एवेदं प्रत्यक्षमिति शक्यं वक्तुम्। ज्ञानाश्रयतया सिद्ध्यतोऽपि मनसो ज्ञानायौगपद्यसिद्ध्या अणुत्वेन स्वीकरणीयस्य प्रत्यक्षाऽविषयत्वादिति ॥

सप्राणेन्द्रियमनस्कस्य शरीरस्य चात्मत्वं न्यायवैशेषिकयोरात्मनिरूपणैकरूप्योपपादनप्रकरणे निरसिष्यते।

अतो देहादिविलक्षण आत्मा यावत् न स्वीक्रियते। न तावदात्मतत्त्व व्यवस्थितं भवति। श्रौतनिश्रेयससाधनात्मतत्वज्ञानं च निर्व्यूढं स्यादिति जानता कणादमहर्षिणा विलक्षणात्मप्रतिपादकं वैशेषिकदर्शनं द्रव्यादिपदार्थप्रस्थानं प्रवर्तितम्।

॥ इति वैशेषिकदर्शनावतरणप्रतिपादनम् ॥

## ॥ शास्त्रारम्भसमर्थनम् ॥

एवं वैशेषिकदर्शनस्योत्पत्तिप्रकारः कथितः। अथ तस्यारम्भणीयत्वं समर्थ्यते

आरम्भप्रयोजकानुबन्धिचतुष्टयनिरूपणेन तावच्छास्त्रारम्भणीयता समर्थिता भवति। अनुबन्धिचतुष्टयस्य चारम्भप्रयोजकत्वं ज्ञायमानस्येति ज्ञेयम् सर्वेऽपि खलु प्रबन्धारस्स्वग्रन्थप्रतिपाद्यमानार्थविशेषावगन्तृपुरुषविशेषसम्भवं जानन्त एव प्रबन्धान् प्रणयन्तीति।

ज्ञानं च क्वचित्सम्भावनात्मकं निश्चयात्मकं च क्वचिदिति विवेकः। प्रत्ययादयश्च स्वीयां सम्भावनां महाकविर्भवभूतिर्मालतीमाधवे प्रथमाङ्के,

"ये नाम केचिदिह नः प्रथयन्त्यवज्ञां
जानन्ति ते किमपि तान् प्रति नैष यत्नः।
उत्पत्स्यते मम तु कोऽपि समानधर्मा
कालो ह्ययं निरवधिर्विपुला च पृथ्वी॥ ८ ॥ इति ॥

अधिकारिणश्चोपस्थास्यत इव सम्भाव्यमानस्योपस्थितस्यापि निर्णीयमानस्य हेतुत्वं जिज्ञासामूलप्रबन्धे। तदेतदस्मिन्नेव शास्त्रे प्रथमसूत्रे प्रतिपाद्यते। तथाहि

'अथातो धर्मं व्याख्यास्यामः' (वै. १, अ. १, आ. १, सू.)

अत्रायमथशब्दश्शिष्योपसत्त्यानन्तर्यपरः। बुद्धिस्थानन्तर्यपराथशब्दस्य भावात्। तादृशाथशब्दस्यैव सूत्रघटकत्वाभ्युपगमात्। स्वपूर्ववाक्यान्तराभावेनान्यविधानानन्तर्यस्य विवक्षाऽसम्भवाच्च। अतश्शब्देन चोपसन्नशिष्यहेतुत्वं प्रतिपाद्यते अन्तेवासिनश्चाधिकारिणो भवन्तीति।

आत्यन्तिकदुःखनिवृत्तिकामनावद्भिश्च शिष्यैः आत्यन्तिकदुःखनिवृत्तिप्रयोजकात्ममननसंपिपादयिषयोपसत्तिकरणात्तेषां कामनारूपाधिकारोऽवसीयते।

कथमेष निर्णयः। आत्यन्तिकदुःखनिवृत्तीच्छावतामेव शिष्याणां मनन-संसिद्ध्यर्था गुरूपसत्तिरिति ?। ऐहिकपारलौकिकफलकामनयाप्यनुवृत्तेर्दर्शनात् ।

सत्यम्। अथापि पदार्थोद्देशसूत्रे मोक्षोपायत्वेन पदार्थतत्वज्ञानस्योपदिश्य-मानत्वाच्छिष्याणां मुमुक्षुत्वनिर्णयस्सुकरः। न ह्यैहिकफलार्थिनां निश्रेयसोपायप्रति-पादनं सङ्गच्छते। मुमुक्षूणां चान्तेवासिनां मोक्षोपायपरशास्त्राधिकारस्संभवत्येवेति।

अतोऽनुबन्धिचतुष्टयान्तर्गताऽधिकारिहेतुकत्वं शास्त्रस्या 'त' इशब्देन प्रति-पादितं भवति।

ननु स्यान्नामाऽनुबन्धिचतुष्टयान्तर्गतस्याधिकारिणोऽवगमः। विषयप्रयोज-नसंबन्धविज्ञानं पुनः कथं सेत्स्यति। येन प्रेक्षावत्प्रवृत्तिरुपपद्येत ।

उच्यते। असति बाधके प्रबन्धानां विषयादिचतुष्टयवत्त्वनियमः। अत एव तेषामनुबन्धित्वेन व्यवहारः। अप्रचितलुप्तप्रबन्धेषु प्रयोजनाधिकारिणोर्विरहे-णाऽसति बाधक इत्युक्तम्। विषयादिव्याप्याऽलुप्तप्रबन्धत्ववत्ताज्ञानाधीना च विषयादिसिद्धिर्वैशेषिकस्यापि समाना। एवं सामान्यतो विषयादिपरिज्ञानस्य ग्रन्थ-दर्शनतस्सिद्धेरेव विषयादिविशेषजिज्ञासाऽप्युपपद्यते। अनुबन्धिचतुष्टयसिद्धौ च विषयादित्रिकसिद्धिः कैमुतिकन्यायसिद्धेति ।

एवं ग्रन्थदर्शनानुमितान् विषयप्रयोजनसंबन्धान् निर्दिशत्पदार्थोद्देशसूत्रं प्रवृत्तम्।

"[१]धर्मविशेषप्रसूताद्द्रव्यगुणकर्मसामान्यविशेषसमवायानां पदार्थानां साध-र्म्यवैधर्म्याभ्यां तत्वज्ञानान्निश्रेयस"मिति।

प्रयोजनवतामारम्भणीयता। शास्त्रस्य च प्रवृत्तपुरुषविशेषकिञ्चित्कारितया प्रयोजनपर्यवसानम्। विषयादिपरिज्ञानस्य च प्रेक्षावत्प्रवृत्तिहेतुतेति स्थितिः। ताम-नुसृत्य प्रेक्षावत्प्रवृत्त्यङ्गं विषयादिपरिज्ञानमनुमानत उपपादितम्। विषयासिद्ध्युप-पादनेन च शास्त्रारम्भणीयता समर्थिता भवति।

---

१. वैशेषिकदर्शने १, अध्याये १, आह्निके ४. सूत्रम्

वैशेषिके च तन्त्रे द्रव्यादयः *प्रधानप्रतिपाद्योऽर्थः । निश्रेयसं परमप्र जनम् । सम्बन्धश्च विषयेण प्रतिपाद्यप्रतिपादकभावलक्षणः फलेन प्रयोज्यप्रयोज भावलक्षणश्च । निश्रेयसकामनावान् विशिष्टोऽधिकारी । एवंविधानुबन्धिचतु संपन्नं च शास्त्रमारम्भणीयमेव ॥

## ॥ अधिकारिनिरूपणम् ॥

ननु निरुक्तानुबन्धिचतुष्टयान्तर्गतोऽधिकारी दुर्निरूपः। विकल्पासहत्वात तथाहि । स किं प्रतिपन्न उताप्रतिपन्नः । नाद्योऽधिकारी । स हि ज्ञाता । खलु ज्ञातृभ्य उपदेशः प्रवर्तते । नापि द्वितीयः । स किमप्रतिपन्नत्वेन प्रति उताप्रतिपन्नः। न तावत्प्रथमः कल्पः । अप्रतिपत्तिनिश्चयेऽनुपदेशश्रौव्यात् । न स्थाण्वादिकं प्रति किञ्चिदुपदेष्टव्यमुपदिशन्ति प्राज्ञाः । नापि द्वितीयः । तथ वा तदुपदेशस्य निष्प्रयोजनत्वापातादिति चेत् ॥ मैवम् । अप्रतिपन्नस्य प्रतिपा योग्यस्यैव शास्त्रेऽधिकारसम्भवात् ॥

अत्र च प्रतिपत्तिशब्दश्शास्त्राधीनप्रमितिपरः प्रतिपत्तव्यः ।

शास्त्राधीनप्रमित्यभाववांश्च पुमान् शास्त्रार्थे सन्दिहानश्शास्त्राध्ययनाधिक मन्तव्यः। तत्तदर्थे सन्दिहानस्यैव तत्तदर्थोपदेशाधीनसिद्धिकार्थविषयजिज्ञासत्वात

अतोऽधिकारी सुनिरूप इति स्थितम् ॥

वैशेषिके च तन्त्रे आत्मतत्वविचारात्मके श्रुतिलोकाधीनप्रसिद्धिद्रव्यादि

---

*टि—एतेन प्रथमसूत्र एव धर्मपदेदम्पदव्याख्यापदैरेव विषयप्रयोजनस न्धानां प्रतिपादनाद्विषयाद्यवगमकथन्ताशङ्कनमयुक्तम् । इदम्पदेन चाधिकार्युपस्थ केन अधिकारिविशेषणकामनाविशेषणतया निश्रेयसमुक्तमित्यपि समाहितम् । प्रेक्ष वत्प्रवृत्त्यङ्गशास्त्रप्रधानप्रतिपाद्यार्थाद्यवगमकथन्ताशङ्कोपपत्तेः । निश्रेयसफलकद्रव्या पदार्थतत्वज्ञानसम्पादके शास्त्रे सप्रतिज्ञानं निरूप्यमाणस्य धर्मस्य 'धर्मेण पा मपनुदति' 'कषाये कर्मभिः पक्वे ततो ज्ञानं प्रवर्तते' इत्यादि शास्त्रेणावगतत ज्ञानप्रयोजकभावस्या मुख्यविषयत्वादितीदमत्रानुसन्धेयम् ॥

[illegible] पुरुषाणामधिकारस्सुनिर्व्यूढः । अधिकारिसम्भवाच्चाधिकारिहेतुकश्शास्त्रारम्भ उपपन्नतरः ॥ इति ॥

॥ इति शास्त्रारम्भसमर्थनम् ॥

॥ अथ काणाददर्शनसमाख्यानिरूपणम् ॥

काणादं च दर्शनम् (१) वैशेषिकदर्शनम् (२) औलूक्यदर्शनमित्यादिभिस्समाख्याभेदैः व्यवह्रियते । कर्मकर्त्रवलम्बनस्समाख्याभेदः । कर्म शास्त्रप्रतिपाद्यमानोऽर्थः । कर्ता शास्त्रप्रणेता ॥

(१) प्रमेयतन्त्रं (२) तर्कशास्त्रमित्यपि काणादस्य नाम सेत्स्यति । उपपादयिष्यते चैतदनन्तरमेव ॥

॥ वैशेषिकदर्शनम् ॥

ननु द्रव्यादिपदार्थनिरूपकस्याऽस्य वैशेषिकदर्शनसमाख्यत्वे हेतुर्वाच्यः ।

उच्यते । सर्वत्रासाधारणार्थावलम्बनं हि नामकरणम् । विशेषपदार्थस्य चैतद्दर्शनासाधारण्याद्युक्तं तदवलम्बनं नाम ॥

यद्यपि जातिसमवाययोरप्यसाधारण्यं साधारणम् । तयोर्द्रव्याद्यतिरेकस्यात्रैव प्रतिपाद्यमानत्वात् । अतस्तदुपरक्तमपि नाम काणादस्य स्यादेव ।

सत्यम् । अथापि न तदुपरक्तेन नाम्ना क्वचिद्व्यवहारश्शास्त्रस्य दृष्टः । वैशेषिकसमाख्यया च शास्त्रस्य व्यवहारो वरीवर्ति [1]पाद्मोत्तरखण्ड[2]प्रशस्तपादभाष्यादौ ।

यद्वा विशेषत्वं व्यावर्तकत्वम् । विशेषाणामिव जातीनामपि व्यावर्तकत्वमेष्टम् । अतो व्यावर्तकत्वावच्छिन्नार्थविशेषपदघटितम् "वैशेषिकदर्शन"मिति नाम जात्यवलम्बनमपि साधीयः । समवायस्य तु जातिविशेषव्यावर्तकत्वनिया-

---

१. 'कणादेन तु संप्रोक्तं शास्त्रं वैशेषिकं महत् ।
गौतमेन तथा न्यायं साङ्ख्यं तु कपिलेन वै ॥'

इति वचनं पाद्मोत्तरखण्डे, २६३. अध्याये पार्वतीमहेश्वरसंवादे ।

२. 'योगाचारविभूत्या यस्तोषयित्वा महेश्वरम् ।
चक्रे वैशेषिकं शास्त्रं तस्मै कणभुजे नमः ॥'

इति प्रशस्तपादभाष्यान्तिमश्लोकः ॥

नकसंबन्धविशेषात्मकस्याप्राधान्यान्न किञ्चिद्बाधकम् । नाम्नः प्रधानार्थावलम्बनत न्यायदर्शननिरूपणे प्रतिपादितत्वात् । जातिविशेषयोर्व्यावर्तकत्वाविशेषेऽपि ज रनेकव्यक्तिसम्बन्धात्सामान्यत्वम् । विशेषस्य त्वेकव्यक्तिविश्रान्तत्वाद्विशेषत्वमि विवेक इति सर्वमवदातम् ।

## ॥ वैशेषिकशब्दव्युत्पादनम् ॥

वैशेषिकशब्दस्य च [१]'विनयादिभ्यष्ठक्' इति सूत्रविहितस्वार्थिकठगन्त विशेषपदार्थवाचकस्य विशेषप्रतिपादकशास्त्रभेदेऽप्यौपचारिकी वृत्तिः । विनयादि विशेषशब्दोऽपि पठ्यते ।

यद्वा तत्र भवार्थे तद्व्याख्यानार्थे वा[२]'बह्वचोऽन्तोदात्ताट्ठञ्'इति सूत्रवि ठञन्तो वैशेषिकशब्दो विशेषपदार्थप्रतिपादके काणाददर्शने वर्तते । वैशे 'विशेषपदार्थमधिकृत्य कृतो ग्रन्थ' इति वाचस्पत्यनिर्वचनमपि फलितार्थक मन्तव्यम् । 'अधिकृत्य कृते ग्रन्थ' इत्यर्थे ठञो दुर्लभत्वात् ।

अयमेव तावद्वैशेषिकशब्द [३]'तदधीते तद्वेदे'ति सूत्रविहिताण्प्रत्यया वैशेषिकदर्शनाधिकृतवाच्यपि भवतीत्यन्यदेतदिति ।

## ॥ वैशेषिकदर्शनसमाख्याया उपपत्त्यन्तरम् ॥

किञ्च वैशेषिकपदघटितं काणादं दर्शनं वैशेषिकदर्शननामभागिव । 'सं क्तसंयोगादग्नेर्वैशेषिकं' इति काणादतन्त्रदशमाध्यायद्वितीयाध्यायसप्तमसूत्रे वैशे कपदोपलम्भात् । अत्र च कल्पे वैशेषिकपदचिह्नितं दर्शनं वैशेषिकदर्शनमि मध्यमपदलोपी समासो बोद्धव्यः ।

॥ इति वैशेषिकदर्शनसमाख्योपपादनम् ॥

## ॥ औलूक्यदर्शनम् ॥

उलूकोपज्ञमिदं काणाददर्शनमौलूक्यदर्शनत्वेन व्यपदिश्यते । उलूकोप त्वं चास्य न्यायकन्दलीटीकायां राजशेखरेण प्रतिपादितम् ॥ यथा—

१. अष्टाध्याय्यां ५ अध्याये, ४ पादे, ३४ सूत्रम् ।
२. अष्टाध्याय्यां ५ अध्याये, ३ पादे, ६७ सूत्रम् ।
३. अष्टाध्याय्यां ४ अध्याये, २ पादे, ५९ सूत्रम् ।

'इह खलु पूर्वमजिह्मब्रह्माभ्यासदूरीकृतप्रमादाय मुनये कणादाय स्वय-
ार उलूकरूपधारी प्रत्यक्षीभूय द्रव्यगुणकर्मसामान्यविशेषसमवायलक्षणं पदार्थ-
कमुपदिदेश। तदनु स महर्षिर्लोकानुकम्पया षट्पदार्थरहस्यप्रपञ्चनपराणि
ाणि रचयाञ्चकारे'ति ॥

चौखाम्बासंस्कृतग्रन्थमालामुद्रितस्य सभाष्योपस्कारस्य वैशेषिकदर्शनस्य
कायां तूलूकनाम्ना कणादेन प्रवर्तितस्य वैशेषिकदर्शनस्यौलूक्यदर्शनसमाख्या-
: प्रतिपादितः ।

'अस्यैवाभूदुलूकेति संज्ञाऽन्या कौतुकावहा ।
यतस्तद्दर्शनं प्रोक्तमौलूक्यापरसंज्ञया ॥' इति ।

स्याद्वा औलूक्येन कणादेन प्रणीतस्य वैशेषिकदर्शनस्यौलूक्यदर्शनमिति
। यथा भट्टिकृतेर्भट्टिकाव्यमिति । प्रतिपादयिष्यते च कणादस्यौलूक्यत्वं वैशे-
दर्शनप्रणेतृचरिते ॥

॥ इत्यौलूक्यदर्शनसमाख्योपपादनम् ॥

## ॥ प्रमेयतन्त्रम् ॥

द्रव्यादिप्रमेयनिरूपकस्य काणाददर्शनस्य 'प्रमेयतन्त्र'मिति नामकरणं सा-
। पदार्थोद्देशसूत्रेण द्रव्यादि प्रमेयत्वेन विशिंषता च प्रमेयनिरूपणप्रवणत्वं
स्य शक्यावगमम् । पदार्थत्वस्य पदजन्यप्रमितिविषयत्वलक्षणस्य प्रमेयत्वपर्य-
ात् । प्रमाणनिरूपणप्रवृत्ते न्यायदर्शने पदार्थत्वेन प्रमाणादीनां निर्देशाभाव-
मर्थमुपोद्बलयति ।

नन्वत्र प्रतिपाद्यार्थकेनार्थशब्देन प्रतिपाद्यप्रतिपादकभावलक्षणसम्बन्धप्रति-
मिति स्थितौ कथं प्रमेयस्य सतो द्रव्यादेश्शास्त्रप्रतिपाद्यत्वमित्यभिधीयते? ।

उच्यते । प्रेक्षावत्प्रवृत्तये तावच्छास्त्रविषयादिकं प्रतिपादनीयमेव । अथापि
प्रतिपाद्यताप्रतिपादनमेवार्थविशेषगोचरं शास्त्रोपादानप्रवृत्तयेऽलम् । न केवलस्य
शेषितस्य वा प्रतिपाद्यत्वस्य प्रतिपादनम् । यद्यपि पदमेव सन्दर्भविशेषविशिष्टं
मित्युच्यते । अतश्च पदत्वेन शास्त्रप्रतिपाद्यत्वमपि ज्ञातमेव भवेत् । अथापि
न? । शास्त्रोपादानप्रवृत्तिहेतुर्हि शास्त्रत्वावच्छिन्नप्रतिपाद्यताज्ञानमेवार्थविशेष-

विषयकम् । विशेषधर्मावच्छिन्नबोधनं च सामान्यवाचिना शब्देन लक्षणयैव निर्वाह्यं स्यात् । न चात्र लक्षणाकल्पनावश्यकता । शास्त्रप्रतिपाद्यस्य द्रव्यादेः प्रमेयत्वबोधने विश्रान्तत्वात्पदार्थशब्दस्य ।

यद्येवम् । तर्हि प्रेक्षावत्प्रवृत्तिः कथं निरूह्यते? । सम्बन्धज्ञानानुपपादनात् पदार्थशब्दाघटिततन्त्रान्तरोपादानप्रवृत्तिर्वा कथं निर्व्यूढा? ॥

ननु सैव कथमिति चेत् । सम्बन्धज्ञानोपपत्तेरेव । (१) अन्तेवासिदयालुना गुरुणा विषयादिप्रतिपादनम् (२) अधिगतनूत्नप्रबन्धेन तदर्थजिज्ञासुना प्रेक्षावतैव ग्रन्थदर्शनप्रवृत्तिरित्यादिको विषयाद्यवगमोपायो हि व्यवस्थित उपलभ्यत इति ।

तत्र स्वतन्त्रः पुरुषो ग्रन्थदर्शनप्रवृत्तो विषयादिकमवगच्छन् यथाभिलषितमुपादत्त उपेक्षते वेति स्थितिः । अत एव विषयादिनिर्देश आवश्यको ग्रन्थारम्भे उक्तं च न्यायकन्दल्यां श्रीधराचार्यैः

'तस्याप्रवृत्तौ शास्त्रं कृतमकृतं स्या' दित्यादिना ।

नन्वेवं न्यायवैशेषिकपदार्थोद्देशसूत्रयोर्विषयप्रयोजनयोर्निर्दिष्टत्वेऽपि शास्त्रानुयोगिकसम्बन्धविशेषाप्रतिपादनात्कथं तत्राधिकारिभेदप्रवृत्तिरुपपद्यते? ।

[१]उच्यते । स्वतन्त्रश्चाधिकारी पदार्थोद्देशसूत्रेण विषयप्रयोजने अवगच्छन् सञ्जातरागस्ताभ्यां ग्रन्थाभिव्यङ्ग्यं भावयन्नुत्तरोत्तरसूत्रदर्शनेन विषयप्रयोजनाभ्यां ग्रन्थस्य सम्बन्धविशेषमवधारयति । ततश्च कृत्स्नशास्त्राध्ययननिरतः कृत्स्नशास्त्रार्थं प्रतिपद्यते । कृत्स्नशास्त्रार्थप्रतिपत्तिमांश्च स्वाभिलषितं सम्पादयतीति सर्वमवदातमिति ।

तदेवं प्रेक्षावत्प्रवृत्त्यौपयिकं विषयादिपरिज्ञानमुपपादितम् ।

कणभक्षाक्षचरणौ पदार्थोद्देशसूत्रयोर्विषयप्रयोजने निर्दिशन्तौ स्वग्रन्थप्रतिपाद्यतां विषयस्य जानन्तौ न तां सूत्रयाञ्चक्रतुः । किन्नाम? । उपरितनसूत्रनिरीक्षणे-

---

१. यद्यपि पदार्थोद्देशसूत्रघटकज्ञानशब्दस्य करणसाधनस्य शास्त्रपरत्वं सम्भवत्येव । प्रतिपादितं चैवमेव तात्पर्यटीकावैशेषिकसूत्रवृत्त्यादौ । अथाऽपि तत्वज्ञानशब्दस्वारस्य मनुरुन्धानैरस्माभिरन्यथासम्बन्धज्ञानोपपत्तिः कृतेति बोध्यम् ।

न्नाधिकारिविशेषगतं सम्बन्धप्रतिपत्त्यधिगमं मन्वाते। तत्र कणभक्षा द्रव्यादीन् पदार्थत्वेन विशिंषन् प्रमेयनिरूपणप्रवृत्ततां स्वग्रन्थस्याभिप्रैति। तर्हि प्रमेयपद-घटितमेव कुतो नासूत्रयदिति तु मन्दचोद्यम्। स्वतन्त्रेच्छस्य नियोगपर्यनुयोगा-नर्हत्वादिति *सारम् ॥

स्याद्वा पदार्थशब्देन प्रवृत्त्यौपयिकसम्बन्धज्ञानप्रतिपादनमित्येव। अथापि द्रव्यादिप्रमेयनिरूपकस्य काणाददर्शनस्य 'प्रमेयतन्त्र'मिति समाख्या साधीयस्येव।

॥ इति प्रमेयतन्त्रसमाख्योपपादनम् ॥

॥ तर्कशास्त्रम् ॥

तर्क्यन्ते प्रतिपाद्यन्त इति तर्का द्रव्यादयः पदार्थाः। तत्प्रतिपादकस्य च काणाददर्शनस्य तर्कशास्त्रसमाख्या साधीयसी।

'तर्कः कणादमुनिप्रणीतं दशाध्याय्यात्मकं सूत्रोपनिबद्धं 'वैशेषिकदर्शन'

---

*टि—इदमत्राकूतम्। विद्यास्थानेषु परिगणितस्य न्यायविस्तरशब्दितस्य न्यायदर्शनस्याधिकृताधिकारित्वेन प्रतिपन्नस्य स्वतन्त्रपुरुषाधिकर्तव्यतोपायप्रतिपाद-नाऽसङ्गतिः। अधिकृताधिकारिकाणां गुरुमुखतोऽध्ययनस्य दर्शनात्।

'अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः।
पुराणं धर्मशास्त्रं च विद्या ह्येताश्चतुर्दश॥
यान्युक्तानि मया सम्यक् विद्यास्थानानि भारत।
उत्पन्नानि पवित्राणि पावनार्थं तथैव च॥
तस्मात्तानि न शूद्रस्य स्प्रष्टव्यानि कथञ्चन।'

इति आश्वमेधिकवचनं च न्यायदर्शनस्याधिकृताधिकारितामाह। 'नचा-नधिकारिणश्शूद्रादीनध्यापयाम्बभूव प्रवरो मुनीना'मिति प्रत्यक्षखण्डे प्रतिपादयंश्च मणिकारोऽधिकृताधिकारितां तस्य मनुत इति ॥

अत्रेदं समाधानम्। सत्यम्। अधिकृताधिकारिकं न्यायदर्शनम्। अथाप्याचार्योपसत्तिप्रयोजकाधिकारिविशेषगतविषयादिप्रतिपत्त्युपपादनपरत्वान्निरुक्त ग्रन्थभागस्य न कश्चन विरोधः। सूचितमेतत्तत्रैवाध्ययनशब्देनेति ॥

मिति न्यायकोशगततर्कशब्दनिर्वचने तर्कत्वेन वैशेषिकदर्शननिर्देशो प्रतिपाद्य समाख्यया प्रबन्धाभिधानमर्यादामनुसृत्य प्रवृत्तो वेदितव्यः ॥

तर्कशब्दः कर्मसाधनः प्रमेयेषु, करणसाधनश्च प्रमाणेषु वर्तते । अत प्रमाणप्रमेयनिरूपकयोर्न्यायवैशेषिकयो 'स्तर्कशास्त्र'मिति नाम सूपपन्नम् ॥

अत एवान्नम्भट्टो द्रव्यादिप्रमेयषट्कं प्रत्यक्षादिप्रमाणचतुष्टयं च सङ्गृहे निरूपयन् अधिकारिविशेषगतं काणादाक्षपादीयदर्शनप्रमेयसुखबोधं स्वप्रबन्धप्रयोज वदन् स्वग्रन्थं 'तर्कसङ्ग्रह' नाम्ना व्याजहार,

काणादन्यायमतयोर्बालव्युत्पत्तिसिद्धये ।
अन्नम्भट्टेन विदुषा रचितस्तर्कसङ्ग्रहः ॥' इति ॥

॥ इति तर्कसङ्ग्रहसमाख्योपपादनम् ॥

॥ इति काणाददर्शनसमाख्यानिरूपणम् ॥

## ॥ वैशेषिकदर्शनप्रणेतृचरितम् ॥

विदितचरमेतद्यत्तत्रभवान् कणभक्षमुनिर्वैशेषिकं दर्शनं [१]प्रणिनायेति ।

अयं तावत्कस्मिन् अन्ववाये जनुमधत्त । कं वा देशविशेषमलञ्चकार कणभक्षत्वं चास्य कथमित्यादिकं विचारणीयम् ॥

## ॥ वैशेषिकदर्शनप्रणेतुः कश्यपगोत्रत्वप्रतिपादनम् ॥

अयं च कश्यपगोत्र इति प्रतीयते । [२]प्रशस्तपादभाष्ये [३]न्यायवार्ति [४]त्रिकाण्डीशेषे च काश्यपत्वेनास्य निर्देशात् । काश्यपशब्दस्य चाण्प्रत्ययान्त कश्यपापत्यसामान्यवाचित्वात् ॥

उदयनाचार्यैः पुनः किरणावल्यामनुमानग्रन्थे लिङ्गनिरूपणे 'काश्य कश्यपात्मजः कणाद' इति प्रतिपादितम् ।

---

१. अत्र च प्रमाणं 'कणादेन तु संप्रोक्तं शास्त्रं वैशेषिकं महत्' इति पद्मोत्तरखण्डवन बोध्यम् ॥

२. 'विरुद्धासिद्धसन्दिग्धमलिङ्गं काश्यपोऽब्रवीत्'

३. चौखाम्बासंस्कृतग्रन्थमालामुद्रितन्यायवार्तिके ९९ पुटे ॥

४. 'कणादः काश्यपस्समौ'

### ॥ कणादव्यपदेशोपपादनम् ॥

तपश्चरणकाले धान्यकणभक्षकत्वादुञ्छेन वृत्तेश्च कणादत्वमस्य सञ्जातम् ।

यथोक्तं भट्टश्रीधरेण न्यायकन्दल्यां

'कणाद इति तस्य कापोतीं वृत्तिमनुतिष्ठतो रथ्यानिपतितान् तण्डुलकणानादाय प्रत्यहं कृताहारनिमित्ता संज्ञा । अत एव निरवकाशः कणान् वा भक्षयत्वित्युपालम्भस्तत्रभवता'मिति ॥

### ॥ कणादस्य मुनित्वोपपादनम् ॥

व्यपदिश्यते चायं मुनिरिति [१]प्रशस्तपादभाष्ये [२]तट्टीकायां जागदीश्यां सूक्तिनाम्न्यामन्यत्र च बहुलम् ॥

उपापीपदच्च भट्टश्रीधरो न्यायकन्दल्यां कणादस्य मुनित्वम् ,

'मुनिमिति शुद्धात्मज्ञानप्रतापक्षपिततमसमत्युग्रतपसं साक्षादशेषतत्वावबोधयुक्तं पुरुषविशेषमाह । एवम्भूत एवार्थे मुनिशब्दस्य लोके दर्शनात्' इति ॥

### ॥ कणादस्यौलूक्यत्वप्रतिपादनम् ॥

[३]न्यायवार्तिके [४]श्लोकवार्तिके च वैशेषिकदर्शनप्रणेता औलूक्यत्वेन निर्दिश्यते ॥

वाचस्पत्ये कणादवाचिन औलूक्यशब्दस्य निष्पत्तिः प्रतिपादिता ॥

'औलूक्य—उलूकर्षेरपत्यम् । गर्गादियञन्तोऽयम् । उलूकनामकर्षेरपत्ये कणादे वैशेषिकसूत्रकार' इति ।

अमरसिंहो महेश्वरश्च वैशेषिकदर्शनद्रष्टुः कणादस्यौलूक्यसमाख्यां प्रत्यपादयताम् ॥

---

१. 'प्रणम्य हेतुमीश्वरं मुनिं कणादमन्वतः ।
पदार्थधर्मसङ्ग्रहः प्रवक्ष्यते महोदयः ॥'

२. 'कणभक्षमुनेः पक्षरक्षाविन्यस्तवासनाः ।
सूक्तिं श्रीजगदीशस्य चिन्तयन्तु विचक्षणाः ॥'

३. चौखाम्बासंस्कृतग्रन्थमालामुद्रिते १६७ पुटे ॥

४. पूर्वमीमांसाप्रथमाध्यायप्रथमपादचतुर्थसूत्रव्याख्याने ॥

'वैशेषिके स्यादौलूक्य' इति

'वैशेषिकः—औलूक्यः। द्वे सप्तपदार्थवादिन' इति च ॥

एवं वैशेषिकप्रणेतुर्नामानि निरूपितानि॥ नामनिरूपणेन च तदीयचरितविशेषोऽप्यवगम्यते।

उलूकगोत्रापत्यं कश्यपात्मजोऽयं वीथीनिपतितान् धान्यकणान् भक्षयित्वा तपस्तेपे महत्तरम्। कणादव्यपदेशभाक् तपःप्रभावप्रसादितमहेश्वरानुग्रहलब्धद्रव्यादिपदार्थविज्ञानस्सोऽयं मुनिर्द्रव्यादिपदार्थतत्वप्रतिपादकानि सूत्राणि रचयाम्बभूवेति॥

॥ इति वैशेषिकदर्शनप्रणेतुर्नामनिरूपणम् ॥

**॥ अथ कणादमुनेर्देशविचारः ॥**

सोऽयं मुनिर्माहेश्वरयोगसम्पादनाय प्रभासतीरवासिनो रुद्रावतारस्य सोमशर्मनाम्नो द्विजवर्यस्यान्तेवासितामयासीदिति वायुपुराणे प्रतिपाद्यते। यथा—

[1]"सप्तविंशतिमे प्राप्ते परिवर्ते क्रमागते।
जातुकर्ण्यो यदा व्यासो भविष्यति तपोधनः॥
तदाप्यहं भविष्यामि सोमशर्मा द्विजोत्तमः।
प्रभासतीर्थमासाद्य योगात्मा लोकविश्रुतः॥
तत्रापि मम ते [2]पुत्रा भविष्यन्ति नरोत्तमाः।
अक्षपादः कणादश्चोलूको वत्स एव च॥
योगात्मानो महात्मानो विमलाश्शुद्धबुद्धयः।
प्राप्य माहेश्वरं योगं रुद्रलोकं ततो गताः॥' इति।

ननु निरुक्तवायुपुराणवचने कणाद उलूकश्च सहपठितौ। प्रतिपादितं च कणादस्योलूकगोत्रापत्यत्वमौलूक्यनामनिरूपणे। कथमिदं सङ्गच्छताम्?॥

---

१. वायुपुराणे पूर्वखण्ड २३ अध्याये महेश्वर ब्रह्मसंवादे॥

२. निरुक्तवचने शिष्याणामेव सतां पुत्रत्वोपचारो बोद्धव्यः; आचार्यान्तेवासिनोर्हि पितृपुत्रभावो जनिसम्पादकयोर्ज्ञानप्रदस्याधिक्यं च, '‘उत्पादकब्रह्मदात्रोर्गरीयान् ब्रह्मदः पिते’ति तत्वचिन्तामणौ प्रतिपाद्यत इति॥

सत्यम् । उलूकगोत्रापत्यस्यैव सतः कणादस्योलूकनामभाक्त्वमपि सम्भवत्येव । कणादोलूकशब्दौ च समानाधिकरणाविति न कश्चिद्दोषः ॥

वस्तुतस्त्वत्र 'औलूक' इति पाठस्स्यात् । 'औलूक इति पाठोऽप्यस्तीति न्यायकन्दलीभूमिकायामभिहितमपि ॥ औलूकशब्दश्च 'ऋष्यन्धे'त्यादिसूत्रविहिताण्प्रत्ययान्त उलूकगोत्रापत्ये कणादे सङ्गच्छत एव । काश्यपशब्दश्च निरुक्तसूत्रविहिताणन्त एव ॥ निरूपितञ्चैतत्सूत्रविहिताण्प्रत्ययस्याऽपत्यसामान्यवचित्वं न्यायदर्शनप्रणेतृपुरुषविशेषनिरूपणटिप्पण्यामस्माभिरिति निरवद्यम् ॥

## ॥ न्यायवैशेषिकप्रणेत्रोस्समानदेशकालत्वप्रतिपादनम् ॥

निरुक्तवायुपुराणवचनेन च न्यायवैशेषिकप्रणेत्रोस्समानदेशकालत्वमवसीयते॥

ननु विदेहराजपुरोहितत्वेन शतपथब्राह्मणादिनिर्दिष्टस्य राहूगणगोतमस्य न्यायदर्शनप्रणेतृत्वेन सम्भाव्यमानस्य मिथिलादेशवासित्वमिति प्रतिपादितं न्यायदर्शनप्रणेतृनिरूपणे । अत्र च प्रभासक्षेत्रवासः प्रतिपाद्यते । कथमिदं सङ्गच्छताम्? ।

किमत्रानुपपन्नम् । एकस्यैवानेकदेशवाससम्भवात् । न वै कश्चन नियमोऽस्ति प्राणिनो यावज्जीवमेकेनैव वासस्थानेन भवितव्यमिति ॥

अथ [१]स्यान्मतम् । न वयं देशविशेषवासनियममवलंब्य न्यायदर्शनप्रणेतुः प्रभासक्षेत्रवासं प्रतिक्षिपामः। येनोपालभ्येम । किन्तु प्रयोजनविरहादेव । गोतमः किल मिथिलादेशे स्वाश्रमे स्थित एवापवर्गनिरूपकं शास्त्रं प्रणिनाय । किमपरमवशिष्यते? । यदर्थमन्ते प्रभासक्षेत्रे सोमशर्मान्तेवासितां गतस्स्यात् । इति ॥

अत्रोच्यते । न प्रयोजनविरहनिबन्धनः प्रभासक्षेत्रवासप्रतिक्षेपस्सम्भवति । प्रयोजनविरहस्यैवासिद्धेः ।

'योगात्मानो महात्मानो विमलाश्शुद्धबुद्धयः ।
प्राप्य माहेश्वरं योगं रुद्रलोकं ततो गताः ॥'

इति वायुपुराणवचनेन हि माहेश्वरयोगप्राप्तिपूर्वकं रुद्रलोकगमनं प्रभासक्षेत्रे सोमशर्मान्तेवासिताफलमवगम्यते ॥

---

१. न्यायवार्तिकभूमिकायां ६६–६७ पुटयोर्द्रष्टव्यम् ॥

यद्यपि पूर्वमेव प्रमाणादिनिरूपकं परम्परया निश्रेयसोपकारकं शास्त्रं प्रणिनायैव। अथापि रुद्रपदप्रेप्सोरेव सतो माहेश्वरयोगसम्पादनाय प्रभासक्षेत्रे सोमशर्मणोऽन्तेवासिता साधीयसी। न हि देहादिविलक्षणात्मस्वरूपनिरूपकं न्यायदर्शनं माहेश्वरपदप्राप्तयेऽलमिति ॥

नच पाषाणकल्पमोक्षव्यवस्थापनादपि न्यायदर्शनप्रणेतुस्तदुपायानुष्ठानमेव कल्प्यम्। अनुष्ठानार्थव्यवस्थापनयोस्समानविषयकत्वानियमात्। अन्यथा लोकायतिकदर्शनप्रवर्तकस्य देवगुरोर्नास्तिकाग्रेसरत्वप्रसङ्गात् ॥

नापि शङ्कापिशाचिकाऽवकाशमासादयति। न्यायदर्शनप्रणेता गोतमोऽनुष्ठितनिस्संज्ञात्मस्वरूपावाप्तिलक्षणनिश्रेयससाधनोऽचित्कल्पमात्मस्वरूपं प्राप्तवानित्यत्र प्रमाणाभावात्। निरुक्तवायुपुराणवचनस्य च माहेश्वरयोगानुष्ठानजनितमाहेश्वरपदप्राप्तिप्रतिपादकस्य भावात्। इति।

निरुक्तवायुपुराणवचनेनाक्षचरणकणभक्षयोस्समानदेशकालत्वावगमात् न्यायवैशेषिकदर्शनयोरुपपाद्योपपादकभावापन्नार्थप्रतिपादनस्य बहुलमुपलम्भाच्चाक्षचरणकणभक्षमुनी कृतसङ्केतौ प्रमाणप्रमेयनिरूपके दर्शने प्रणीतवन्ताविति सम्भाव्यते ॥

अतो न न्यायवैशेषिकयोरुत्पत्तौ बहुकालान्तरतेति स्थितम् ॥

॥ इति न्यायवैशेषिकप्रणेत्रोस्समानदेशकालत्वप्रतिपादनम् ॥

अत एव मिथिलादेशे वैशेषिकदर्शनप्रणेतुः कणभक्षमुनेः गोतमसहितस्य माहेश्वरयोगसम्पादनाय सोमशर्माश्रयणमिति सिद्धम् ॥

सोमशर्मसकाशात् माहेश्वरयोगसम्पादनानन्तरं दर्शनप्रणयनवादश्चानुपपन्नः। माहेश्वरयोगलाभानन्तरकालिकमाहेश्वरयोगानुष्ठानजनितरुद्रलोकावाप्तिप्रतिपादकवायुपुराणवचनस्वारस्यविरोधात् ॥ इति ॥

॥ इति कणादमुनेर्देशविचारः ॥

॥ इति वैशेषिकदर्शनप्रणेतृचरितम् ॥

॥ इति तर्कशास्त्रनिरूपणे वैशेषिकदर्शननिरूपणं नाम तृतीयोल्लासः ॥

## ॥ तर्कशास्त्र निरूपणम् ॥

### ४. षड्दर्शनीपौर्वापर्य निरूपणम् ॥

अथ तावत् षड्दर्शनीपौर्वापर्यं निरूप्यते न्यायवैशेषिकयोस्स्वाभावविशेषपरिच्छित्यै ॥

### ॥ न्यायवैशेषिकयोः पौर्वापर्य निरूपणम् ॥

तत्रादौ न्यायवैशेषिकयोरात्मनिरूपणैकमत्यं प्रतिपाद्यते तयोः पौर्वापर्यनिर्णयाय ।

### ॥ न्यायवैशेषिकयोरात्मनिरूपणैकमत्यप्रतिपादनम् ॥

न्यायवैशेषिकयोस्तावद्देहेन्द्रियमनोबुद्धिसङ्घातातिरिक्त आत्मा प्रतिपादितः । तथाहि—

### ॥ न्यायदर्शन आत्मनिरूपणम् ॥

'इच्छाद्वेषप्रयत्नसुखदुःखज्ञानान्यात्मनो लिङ्गम्' इति (न्या. १, अ. १, आ, १० सू.) न्यायसूत्रम्

विलक्षणात्मनि प्रमाणप्रतिपादकं भवति ।

अभाषिष्ट च वात्स्यायनोऽस्मिन्नेवसूत्रे इच्छादीनां विलक्षणात्मनि प्रामाण्यम्।

इदं च प्रमेयपरीक्षासिद्धं शरीराद्यनात्मत्वमुपजीव्येति तदेवात्र निरूप्यते ।

### ॥ न्यायदर्शन आत्मन इन्द्रियाऽतिरेकप्रतिपादनम् ॥

तत्र चाक्षुषरासनादिज्ञानानां तत्तदिन्द्रियान्वयव्यतिरेकानुविधाय्यन्वयव्यतिरेकाणां तत्तदिन्द्रियाश्रयत्वमेव युक्तमितीन्द्रियात्मवादः विभिन्नकर्तृकज्ञानद्वयप्रतिसन्धानानुपपत्तेः करणतया इन्द्रियान्वयनियमोपपत्तेश्च निराचिकीर्षितः

'दर्शनस्पर्शनाभ्यामेकार्थग्रहणात्' (न्या. ३—१—१)

'न विषयव्यवस्थापनात्' (न्या. ३—१—२)

'तद्व्यवस्थानादेवात्मसद्भावादप्रतिषेधः' (न्या. ३—१—३) इति त्रिसूत्र्या ।

इन्द्रियेभ्यो वैलक्षण्यं ज्ञातुरात्मनः प्रकारान्तरेणापि प्रतिपादितम् ॥

'इन्द्रियान्तरविकारात्' (न्या. ३—१—१२) इति सूत्रे ।

यथा—सहचरितयो रूपरसयोर्गृहीतयोरन्यतरदर्शननिबन्धनार्थान्तरस्मरणमूल इन्द्रियान्तरविकारोर्थद्रष्यप्रतिपत्तारमेकमाक्षिपति । इन्द्रियात्मवादे चान्यस्य रूपग्रहण मन्यस्य रसग्रहणमित्येकस्यानेकार्थद्रष्टुरभावेनान्यतरार्थदर्शनाधीनार्थान्तरस्मृत्ययोगादिन्द्रियान्तरविकारोऽनुपपन्न एव स्यादिति ॥

एनेन क्षणिकचैतन्यात्मवादोऽपि निरस्तः। सहचारदर्शन,, तदाहितसंस्कारोद्बोधक सहचरितार्थान्तरदर्शनार्थान्तरोपस्थितिलक्षणज्ञानपरम्परानिर्वाह्यस्येद्रियान्तरविकारस्य स्थिरात्मसद्भाव एवोपपत्तेरिति ॥

## ॥ अथ शरीरातिरेकवादः ॥

शरीरात्मवादे च कृतहानाकृताभ्यागमप्रसङ्गः हिंसकस्य फलानुभवश्च न स्यात् । विलक्षणात्मवादे चात्मनश्शरीरादिभ्यो विभजनलक्षणहिंसाफलानुभवस्स्थिरस्यात्मन उपपद्यत एव ।

तदेतत्प्रतिपादयन्ति न्यायसूत्राणि,

'शरीरदाहे पातकाभावात्' (न्या. ३–१–४)

'तदभावस्सात्मकदाहेऽपि तन्नित्यत्वात्' (न्या. ३–१–५)

'न कार्याश्रयकर्तृवधात्' (न्या. ३–१–६) इति ।

कर्तृनित्यत्वाभ्युपगमादेव कृतहानादिरपि न प्रसज्यते । इति ।

## ॥ अथ मनोऽतिरेकप्रतिपादनम् ॥

यद्यपि मनसश्चैतन्याभ्युपगमे तस्य नित्यैकत्वात्प्रत्यभिज्ञानं हिंसादिफलोपभोगश्चोपपद्येते ॥ अथापि तस्याणुत्वात्तदीयधर्माणां ज्ञानसुखादीनामतीन्द्रियत्वप्रसङ्गः ।

यथोक्तं विश्वनाथीयन्यायसूत्रवृत्तौ

'वस्तुतो युगपज्ज्ञेयानुपलब्धेरित्यणुत्वं सूचितम् । तथाच तद्गतसुखाद्यप्रत्यक्षता स्यादिति ॥

## ॥ न्यायवैशेषिकयोर्मनोनिरूपणैकरूप्योपपादनम् ॥

मनसश्चाणुत्वं धर्मिग्राहकमानसिद्धम् । धर्मिग्राहकमानं च ज्ञानायौगपद्य-

लक्षणं प्रतिपादयत्सूत्रं [१]'युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गम्' (न्या. १–१–१६) इति न्याये, वैशेषिके च

'आत्मेन्द्रियार्थसन्निकर्षे ज्ञानस्य भावोऽभावश्च मनसो लिङ्गं (वै. ३–२–१) इति समुपलभ्यते ।

आत्मेन्द्रियार्थानां मिथस्सन्निकर्षे सति यत्सान्निध्यसन्निधिप्रयोज्यौ कार्य भावाभावौ तौ तत्र मनश्शब्दिते प्रमाणं भवत इति वैशेषिकसूत्रार्थः ।

सूत्रस्थश्चशब्द उक्तार्थसमुच्चायक उपवर्णितः ।

यत्पुनश्चन्द्रकान्तीयभाष्ये सूत्रस्थस्य चकारस्य 'स्मृत्यनुमानागमप्रतिभास्वप्नज्ञानोहास्सुखादिप्रत्यक्षमिच्छादयश्च मनसो लिङ्गानि । तेषु सत्स्वियमपि युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्ग'मिति न्यायभाष्यनिर्दिष्टस्मृत्यादिपरामर्शकत्वं प्रतिपादितम् । तत्रापि न नो विद्वेषः ।

ज्ञानायौगपद्यात्सिद्ध्यच्च मनोणुरूपमेव सेत्स्यति । विभुत्वे ज्ञानायौगपद्यानिर्वाहात् । इति ॥

दर्शनद्वयेज्ञानायौगपद्यस्यमनोलिङ्गताकण्ठोक्तिर्मनोऽणुत्वसिद्ध्यभिसन्धिकृता।

ज्ञानायौगपद्यं च मनसो विभुत्वेऽणोर्वा तस्य प्रतिशरीरं नानात्वे नोपपद्यते । अतो मनसोऽणुत्वं प्रतिशरीरमेकत्वं च प्रतिपादितं न्यायदर्शने

'ज्ञानायौगपद्यादेकम्' (न्या. ३–२–५७)

'यथोक्तहेतुत्वाच्चाणु' (न्या. ३–२–६०) इति सूत्राभ्याम् ॥

वैशेषिके च ज्ञानायौगपद्येन सिद्ध्यतो मनसोऽणुत्वं सिद्धं कृत्वा तस्य द्रव्यत्व नित्यत्वप्रतिपादनपूर्वकं प्रतिशरीरमेकत्वं व्यवस्थापितम् ॥

'प्रयत्नायौगपद्याज्ज्ञानायौगपद्याच्चैकम्' इति (वै. ३, अ. २, आ. ३) सूत्रे ।

ज्ञानप्रयत्नानां यौगपद्येन प्रतीयमानानामुपपन्नत्वं मनोगतिशैघ्र्यनिबन्धनम्

'न युगपदनेकक्रियोपलब्धेः' (न्या. ३–२–५८)

---

१. अत्रायं प्रयोगोऽभिमतः। चक्षुरादीन्द्रियमात्मप्रवृत्तावधिष्ठायकान्तरापेक्षम् । अयुगपत्प्रवृत्तेः । वास्यादिवदिति । विस्तरस्तु न्यायवार्तिके द्रष्टव्यः ।

'अलातचक्रदर्शनवत्तदुपलब्धिराशुसञ्चारात्' (न्या. ३–२–५९) इ
न्यायसूत्राभ्यां प्रतिपादितमभिप्रायन्निवाह कणभक्षमुनि; 'प्रयत्नायौगपद्याज्ज्ञानायौ
पद्याच्चैकम्' इति ॥

इदं तावद्वैशेषिकस्य न्यायानन्तरत्वे लिङ्गम्। इति ॥

तस्मान्मनसोऽणुत्वात्तस्यात्मत्वे तद्गुणानां ज्ञानसुखादीनामनुपलब्धिः प्रस
ज्यत इति स्थितम् ॥

किञ्च सुखाद्युपलब्धीनां क्रियाणां करणत्वेनापि मनोनुमानं सम्भवति
मन आत्मवादिनश्च मनसः करणत्वसाधनं विमतं भवति। करणं हि कर्तुः क्रिय
सिद्धौ प्रकृष्टोपकारकम्। अतो ज्ञातृवैलक्षण्यं तस्य प्रसज्यत इति।

अतस्स एवं ब्रूयात्। रूपादिसाक्षात्कारस्सकरणकः। सुखादिसाक्षात्का
रश्च निस्साधन इति।

स प्रतिबोधनीयः, रूपादिसाक्षात्कारोपि निस्साधनो भविष्यतीति। भव
काममिति चेत्। इन्द्रियसामान्योच्छेदप्रसङ्गोन्धबधिराद्यभावप्रसङ्गश्चेति।

यथा विषयभेदेन व्यवस्थितानि बाह्येन्द्रियाणि एव मान्तरमपि सुखादि
ग्राहकं मन इन्द्रियं भवितुं अर्हतीति तु सारम्। तथा च सूत्रम्,

'नात्मप्रतिपत्तिहेतूनां मनसि सम्भवात्' (न्या. ३–१–१६)

'ज्ञातुर्ज्ञानसाधनोपपत्तेस्संज्ञाभेदमात्रम्' (न्या. ३–१–१७)

'नियमश्च निरनुमान' (न्या. ३–१–१८) इति।

देहादेरात्मत्वनिराकरणेनैव सङ्घातात्मत्वमपि निरस्तम्। सङ्घातो ह्यवस्था
भेदेन भिद्यमानो न पूर्वापरकालानुभूतार्थद्वयप्रतिसन्धानहेतुर्भवतीति।

तस्माद्देहादिविलक्षण आत्मेति सिद्धम्।

॥ इति न्यायदर्शन आत्मनिरूपणम् ॥

## ॥ अथ वैशेषिक आत्मनिरूपणम् ॥

आत्मा तावच्चेतन इत्यविवादम्। तद्विषयिणीचविप्रतिपत्तिश्चैतन्याश्र
विप्रतिपत्तिपर्यवसिता। भवति च चैतन्याश्रये विप्रतिपत्तिः। कायाकारपरिणता

भूतानि । इन्द्रियाणि । मनः । प्राणः । धीः । विलक्षण इति च । ... संशयः । किं देहादिरेवाऽऽत्मा । उत विलक्षण इति ।

तत्राह कणभक्षमुनिः

'प्रसिद्धा इन्द्रियार्थाः' (वै. ३–१–१)

'इन्द्रियार्थप्रसिद्धिरिन्द्रियार्थेभ्योऽर्थान्तरस्य हेतुः' (वै. ३–१–२) इति ।

इन्द्रियार्था रूपादय 'इदं नील' मित्यादिप्रत्यक्षगोचरा इत्यपरोक्षमिदं समेषामिति प्रथमसूत्रस्यार्थः । अनेनात्मसाधकानुमाने पक्षासिद्धिः परास्ता ।

इन्द्रियार्थप्रसिद्धिश्चेन्द्रियार्थेभ्योऽर्थान्तरस्य हेतुर्द्वेधा । रूपादिप्रसिद्धिर्द्रव्याश्रिता गुणत्वाद्रूपवदित्याश्रयतया साक्षात् । सा सकरणिका क्रियात्वाच्छिदिक्रियावत् । करणं च कर्तृप्रयोज्यं करणत्वाद्वास्यादिवदिति करणप्रयोजकतया परम्परया चेति । अर्थान्तरस्य हेतुर्ज्ञापक इति द्वितीयसूत्रार्थः ।

अनेन च विलक्षणात्मसाधिकेन्द्रियार्थप्रसिद्धिरित्युक्तं भवति । अत्र प्रथमानुमानं देहादिवैलक्षण्यसाधकं चैतन्याश्रयस्य । द्वितीयं चेन्द्रियवैलक्षण्यसाधकमिति विवेकः ।

ननु प्रथमानुमानेन प्रसिद्ध्याश्रय एव सिद्ध्येत् । न तु विलक्षणः । प्रसिद्ध्या नियतान्वयव्यतिरेकशालिनो देहादेरेव प्रसिद्ध्याश्रयत्वोपपत्तेः । प्रयोगश्च भवति । शरीरगुणश्चैतन्यं तज्जन्यत्वात्तद्रूपवदिति । एवमिन्द्रियगुणत्वमपि प्राप्तम् । अत्राह—

'सोऽनपदेशः' (वै. ३–१–३) इति ।

प्रसिद्ध्या सममन्वयव्यतिरेकनियमश्शरीरेन्द्रियाणां अवच्छेदकदेशत्व निबन्धनोऽपि सम्भवति । तज्जन्यत्वहेतोश्च प्रदीपानाश्रितप्रदीपप्रयोज्यज्ञानवृत्तेः कुलालाद्यनाश्रितकुलालादिजन्य घटादिवृत्तेर्वा न शरीरादिजन्यज्ञानीयशरीराद्याश्रयत्वसाधनपटुनेति सूत्रभावः ।

अथ मन्येत । ज्ञानत्वविशेषितस्यैव तज्जन्यत्वस्य तदाश्रयत्वसाधकता । न च व्याप्तिग्रहासम्भवः । व्यतिरेकव्याप्तिग्रहणोपपत्तेः । शरीराद्यनाश्रितानां हि

घटादीनां शरीरादिजन्यज्ञानत्वविरहो दृष्ट इति। न चाप्रयोजकत्वं शङ्क्यम् लाघवतर्कपराहतत्वादप्रयोजकत्वशङ्कायाः। शरीरादिजन्यज्ञानस्याश्रयाकाङ्क्षायां हि लाघवेन क्लृप्तस्य शरीरादेरेवाश्रयत्वं कल्पयितुं युक्तम्। 'धर्मिकल्पनातो वरं धर्मकल्पनेति न्यायात्। अत उत्तरं पठति 'कारणाज्ञानात्' (वै. ३—१—४) इति

अयं भावः। लाघवस्य तावद्बाधकानपोदितस्यैवार्थव्यवस्थापनपटुता शरीरचैतन्याभ्युपगमे च तत्कारणेष्वपि ज्ञानं प्रसज्यते। जन्यद्रव्यविशेषगुणानां कारणगुणपूर्वकतादर्शनात्॥ न चकराद्यवयवेषु ज्ञानमास्ते। अतोऽचेतनारब्धत्वं शरीरचैतन्ये बाधकम्। बाधकसंवलितस्य च लाघवतर्कस्य न शरीरचैतन्यव्यवस्थापकत्वम्। प्रतिप्रयोगश्च भवति। चैतन्यं न शरीरगुणः। अचेतनारब्धदेहकार्यत्वात् घटादिवदिति। इति॥

अथ मन्येत। शरीरावयवेष्वपि ज्ञानस्वीकारान्न शरीरचैतन्ये बाधकावतार इति। अत्राह—

'कार्येषु ज्ञानात्' (वै. ३—१—५) इति।

यदि शरीरावयवेषु ज्ञानं स्वीक्रियते। तर्हि तदवयवधारायाश्चेतनत्वापातः परमाणोरपि चैतन्येवान्तरजातिविशेषशून्यस्य तस्यैव कदाचिद्घटाद्यारम्भकत्वमिति चेतनारब्धस्य घटादेश्चेतनत्वं प्रसज्यत इति सूत्रभावः॥

यदि घटादेश्चैतन्यमिष्यत इत्युच्यते। तत्राह—

'अज्ञानाच्च' (वै. ३, अ. १, आ. ६) इति॥

अतिपतितसकलप्रमाणसम्भावनाभूमिं तमिममर्थं साधयन् शशशृङ्गमपि साधयेत्। कोह्यनयोर्विशेष इति॥ अतोचेतनहेतुकत्वं शरीरस्य स्थितम्। तेन चाचेतनत्वं तस्य सेत्स्यतीति सूत्रभावः।

तदेवं वैशेषिके षट्सूत्र्या भूतचैतन्यप्रसङ्गेन शरीरात्मत्वं निराकृतम्। अत इन्द्रियात्मत्वमपि निरस्तं बोध्यम्। भौतिकानां हीन्द्रियाणां भूतचैतन्यप्रसङ्गादेव चैतन्यं न सम्भवतीति।

इदञ्च न्यायदर्शनव्यवस्थापितेन्द्रियभौतिकत्वोपजीवनेनेति बोध्यम्।

॥ इन्द्रियभौतिकत्वप्रतिपादनम् ॥

तथा च सूत्रम् । 'भूतगुणविशेषोपलब्धेस्तादात्म्यम्' (न्या. ३–१–५९) इति ।

नियतभूतगुणोपलम्भकत्वानामिन्द्रियाणां नियतभूतगुणाभिव्यञ्जकसम्प्रतिपन्नभौतिकभावगोघृतादिदृष्टान्तेन पार्थिवत्वाद्यनुमेयमिति सूत्रभावः ॥

एवमिन्द्रियाणां भौतिकत्वं न्यायसूत्रोपपादितमुपजीव्य 'तत्पुनः पृथिव्यादिकार्यद्रव्यं त्रिविधं शरीरेन्द्रियविषयसंज्ञकम्' (वै. ४–२–१) इति व्यभाङ्क्षीत् कणभक्षमुनिः ।

इदमपि वैशेषिकस्य न्यायानन्तरत्वे लिङ्गम् । इति ॥

॥ शरीरस्यैकभौतिकत्वप्रतिपादनम् ॥

शरीरस्य चैकभूतोपादनत्वं पाञ्चभौतिकत्वादिपक्षप्रतिक्षेपेण व्यवस्थापितं न्यायवैशेषिकयोः ॥ तथाहि, 'पार्थिवं गुणान्तरोपलब्धे' रिति (न्या. ३–१–२८) सूत्रयं स्तावन्महर्षिर्गौतमोऽस्मदादिशरीरस्य गन्धवत्त्वं पार्थिवत्वे प्रमाणं मनुते ॥

अथ खलु तत्रभवानक्षपादः

'पार्थिवाप्यतैजसं तद्गुणोपलब्धेः' (न्या. ३–१–२९)

'निच्छ्वासोच्छ्वासोपलब्धेश्चातुर्भौतिकम्' (न्या. ३–१–३०)

'गन्धक्लेदपाकव्यूहावकाशदानेभ्यः पाञ्चभौतिकम्' (न्या. ३–१–३१) इति त्रिसूत्र्या शरीरे मतभेदं प्रतिपादयन् एकभूतोपादानकेपि शरीरे भूतान्तराणामुपष्टम्भकतयानुप्रवेशाद्भूतान्तरकार्योपलब्धिरिति न क्लेदादिना पाञ्चभौतिकत्वाद्यनुमेयमिति जानन् गन्धं च यावच्छरीरभाविनं स्वाभाविकं पार्थिवत्वे विनिगमकं पश्यन्नस्मदादिशरीरस्य पार्थिवत्वे श्रुतिं प्रमाणयन् स्वपक्षमेव व्यवस्थापयामास ॥

शास्त्रानुगृहीतया युक्त्यार्थव्यवस्थापने केवलयौक्तिकाश्शरीरपाञ्चभौतिकत्वादिवादा न प्रगल्भन्त इति लिङ्गश्रुतिप्रतिपादकसूत्रमध्ये पाञ्चभौतिकत्वादिपक्षमुपक्षिप्तवतोऽक्षपादमुनेरभिप्रायः ॥

कणभक्षश्च शरीरस्य पाञ्चभौतिकादित्वे बाधकानि क्लेदादेश्चान्यथासिद्धिं मुक्तकण्ठं प्रत्यपादयत ॥

'प्रत्यक्षाप्रत्यक्षाणां संयोगस्याप्रत्यक्षत्वात्पञ्चात्मकं न विद्यते' (वै. ४-२-२)
'गुणान्तराप्रादुर्भावाच्च न त्र्यात्मकम्' (वै. ४—२—३)
'अणुसंयोगस्त्वप्रतिषिद्धः' (वै. ४—२—४) इति त्रिसूत्र्या ॥

उपादानविशेषसंसिद्धिं च

पार्थिवं गुणान्तरोपलब्धे'रिति तन्त्रान्तरव्यवस्थितेस्सम्पाद्यां जानन्नोपादान-विशेषप्रतिपादने व्यापृतवान् ॥

इदं च वैशेषिकस्य न्यायानन्तरत्वे लिङ्गम् ॥ इति।

तदेवं शरीरेन्द्रियाणां भौतिकत्वं प्रतिपादितम्। भौतिकानां चात्मत्वं भूत-चैतन्यप्रसङ्गेन परिहृतम् ॥ अत एव प्राणात्मवादोपि प्रतिक्षिप्तो वेदितव्यः ॥

'इन्द्रियार्थप्रसिद्धिरिन्द्रियार्थेभ्योऽर्थान्तरस्य हेतु'रिति काणादसूत्रमिन्द्रि-यार्थप्रसिद्धिशब्दितं रूपादिविषयसाक्षात्कारं विलक्षणात्मनि प्रमाणं प्रतिपादयति। मानसप्रत्यक्षस्य च विलक्षणात्मगमकत्वं 'आत्मेन्द्रियार्थसन्निकर्षाद्यन्निष्पद्यते तदन्य' दिति (वै. ३—१—१८) सूत्रम्।

इदं च ज्ञानसामान्यगमकताया उपलक्षणम्।

अथ विलक्षणात्मन्येव प्रमाणान्तराण्यपि प्रतिपादयत् 'प्राणापाननिमेषो-न्मेषजीवनमनोगतीन्द्रियान्तरविकारास्सुखदुःखेच्छाद्वेषप्रयत्नाश्चात्मनो लिङ्गानी'ति (वै. ३—२—४) सूत्रमुपलभ्यते ॥

अत्र चेन्द्रियान्तरविकारप्रभृतयो न्यायदर्शननिर्दिष्टाः प्राणापानादयश्चाधिका आत्मप्रमाणत्वेन प्रतिपाद्यन्ते ॥

इदं च वैशेषिकस्य न्यायानन्तरत्वे लिङ्गम् ॥

ज्ञानस्यचात्मलिङ्गतां प्रतिपादयन्तौ कणभक्षाक्षचरणौ चैतन्यात्मतां नानु-मन्येते। न हि ज्ञानं ज्ञानाश्रयं भवति ॥ गुणे गुणानङ्गीकारात्। किञ्चाहं जाना-मीत्यहमर्थधर्मतया प्रतीयमानं ज्ञानं न स्वतन्त्र आत्मा भवितुमर्हतीति ॥

वैशेषिकसूत्रप्रतिपाद्यमानाश्च प्राणापानादयः इच्छाप्रयत्नापेक्षा इच्छाप्रयत्न-समवायिनि विलक्षणात्मनि प्रमाणानि भवन्ति।

असम्भावितशरीरादिधर्मत्वज्ञानसमानाश्रयाश्चेच्छादयो विलक्षणात्मसाधका मन्तव्याः ॥

**॥ चैतन्य शरीरधर्मत्वासम्भवोपपादनम् ॥**

अत्र शरीरात्मवादी मन्यते। यदुक्तं भूतचैतन्यप्रसङ्गेनासम्भावितशरीरादि धर्मत्वस्य ज्ञानस्य तत्सहचरितप्रयत्नादेश्च विलक्षणात्मगमकत्वमिति ॥ तन्न समीचीनम्। ज्ञानस्य शरीरधर्मत्वोपपत्तेः ॥ नच भूतचैतन्यप्रसङ्गः। उत्पत्तिप्रतिबद्धानामेव कार्यविशेषगुणानां कारणगुणपूर्वकतादर्शनात् ॥ ज्ञानस्य च स्थितेपि कार्यद्रव्ये सहकारिसमवधानप्रयोज्योत्पत्तिकस्य शरीरधर्मत्वेपि भूतचैतन्याप्राप्तेः॥ अवश्यं चैतदभ्युपगन्तव्यम् ॥ 'गोरोहं जानीमी'त्यादि प्रतीतेश्चैतन्यशरीरधर्मत्वव्यवस्थापिकाया भावादिति ।

अत्रोच्यते। न ज्ञानादिश्शरीरविशेषगुणो भवितुमर्हति। अयावद्द्रव्यभावित्वादेव। यश्च शरीरविशेषगुणो रूपादिस्स यावद्द्रव्यभावी दृष्टः। न च यावच्छरीरभावि ज्ञानम्। तस्मान्न शरीरविशेषगुण इति ।

ननु यावच्छरीरभाविनां रूपादीनां शरीरधर्माणां चाक्षुषप्रत्यक्षगोचरता दृष्टा। अतोयावच्छरीरभाविनि ज्ञाने बहिरिन्द्रियजप्रत्यक्षाविषये विशिष्टशरीरधर्मत्वस्यैव निषेधस्स्यात्। न तु शरीरधर्मत्वमात्रस्येति चेन्न ॥

शरीरगुणस्तावद्द्विविधाः। बाह्येन्द्रियजप्रत्यक्षगोचरा रूपादयः। अतीन्द्रियं च गुरुत्वादीति। बुद्धिरप्येतयोरेकामवस्थामासाद्य शरीरधर्मतामश्नुते। नान्यथा। सा च न बाह्येन्द्रियजन्यप्रत्यक्षविषयः। नाप्यतीन्द्रिया। किन्तु मानसप्रत्यक्षविषयः। अतोनास्याश्शरीरधर्मता सम्भवतीति ॥

तदेतत्प्रत्यपादयदक्षपादः

'अयावद्द्रव्यभावित्वात्' (न्या. ३–२–४८)

'शरीरगुणवैधर्म्यात्' (न्या. ३–२–५४) इति सूत्राभ्याम् ॥

'गौरोहं जानामी'त्यादिप्रतीतिमवलम्बमानानां च देहात्मवादिनां प्रतिक्षेपार्थता निरुक्तसूत्रयोर्विश्वनाथीयन्यायसूत्रवृत्तेरवगम्यते ॥

शरीरगोचराहंबुद्धिशब्दयोर्गौणत्वं च गोतमाभिमतं प्रत्यपादयत्स्वीये दर्शने कणभक्षः ॥

अतश्च वैशेषिकस्य न्यायानन्तरत्वं साधीय एव ॥

॥ इति न्यायवैशेषिकयोरात्मनिरूपणैकरूप्योपपादनम् ॥

**॥ न्यायवैशेषिकयोः पौर्वापर्यसाधकहेतुनिर्देशः ॥**

अथानेकत्र प्रतिपादिता न्यायवैशेषिकयोः पौर्वापर्यहेतवस्सङ्कलय्य प्रतिपाद्यन्ते ।

(१) [१]न्यायदर्शनप्रतिपादितस्याम्नायप्रामाण्यसाधकहेतोरसिद्धिपरिहारकत्वात् (२) [२]न्यायदर्शनप्रतिपादितज्ञानयौगपद्यप्रतीत्यन्यथासिद्ध्युपजीवि मन एकत्वप्रतिपादनशालित्वात् (३) [३]न्यायदर्शनव्यवस्थापितेन्द्रियभौतिकत्वोपजीवि पृथिव्यादिविभागकारित्वात् (४) [४]न्यायदर्शनव्यवस्थापितैकभौतिकत्वशेषतया शरीरपाञ्चभौतिकत्वादिनिरासकारित्वात् (५) [५] अधिकात्मप्रमाणोपदेष्टृत्वात् (६) [६]न्यायदर्शनव्यवस्थापितचैतन्यशरीरधर्मताप्रतिक्षेपपूर्वकशरीरगोचराहम्बुद्धि—शब्दगौणताप्रतिपादनपरत्वात् (७) [७]प्रमेयतन्त्रत्वात (७) [८]न्यायदर्शनव्यवस्थापितोपमानशब्दप्रमाणान्तरताप्रतिक्षेपकत्वात् (९) [९]न्यायदर्शनप्रतिपादिताभावकारणत्वप्रतिक्षेपोपजीविभावरूपमूलकारणनित्यत्वरूपादिमत्त्वप्रतिपादनशालित्वात् (१०) [१०]न्यायदर्शननिर्दिष्टशब्दानित्यत्वहेतूपपादकत्वात् (११) [११]न्यायदर्शन-

---

१. प्रथमोल्लासे—टिप्पण्याम् ।
२. चतुर्थोल्लासे—न्यायवैशेषिकयोर्मनोनिरूपणैकरूप्योपपादने,
३. ,, इन्द्रियभौतिकत्वव्यवस्थापने,
४. ,, शरीरस्यैकभौतिकतानिरूपणे,
५. ,, वैशेषिकगतात्मनिरूपणप्रतिपादने,
६. ,, चैतन्यशरीरधर्मत्वाभावनिरूपणे,
७. ,, दर्शनषट्कचरिते,
८. ,, प्रमाणचरिते,
९. ,, न्यायवैशेषिकयोःपरमाणुकारणत्वप्रतिपादने(टिप्पण्यां),

प्रतिपादिताध्यापनादेस्तदप्रतिपादितप्रत्यभिज्ञादेश्चैकेनैव सूत्रेण शब्दनित्यत्वसाधकत्व प्रतिक्षेपकत्वात् (१२) १२वर्णसंख्यानियमोपपादकत्वाच्च वैशेषिकदर्शनस्य न्याय-दर्शनानन्तरत्वं सेत्स्यति ॥

॥ इति न्यायवैशेषिकयोः पौर्वापर्यनिरूपणम् ॥

**॥ षड्दर्शनीपौर्वापर्यनिरूपणम् ॥**

अथ षट्दर्शनीपौर्वापर्यं तावन्निरूप्यते न्यायवैशेषिकयोस्स्वाभावविशेषपरि-च्छित्यै । तत्र, दर्शनषट्कप्रकृतिप्रमाणचरितानां पर्यालोचनेन दर्शनषट्कपौर्वापर्यं शक्यावगममिति तान्येवादौ प्रतिपाद्यन्ते ।

**॥ दर्शनषट्कचरितम् ॥**

भगवदवतारेण तावद्बुद्धनाम्ना जगति शून्यीकृते महर्षिरक्षपादः प्रमाणानि न्यरूपयत्स्वीये न्यायदर्शने । कणभक्षमुनिश्च प्रमेयनिरूपकं दशाध्यायीलक्षणं वैशेषिकदर्शनं प्रणिनाय ।

प्रमाणप्रमेयनिरूपकयोश्च न्यायवैशेषिकयोर्विलक्षणात्मनिरूपणेन निश्श्रेयसाभि सम्बन्धः । तत्र प्रमाणनिरूपणप्रवृत्तस्तावदक्षपादमुनिस्स्वं दर्शनं निश्श्रेयसेन सफल-यितुकामस्तत्रात्मादि द्वादशविधं प्रमेयं न्यरूपयत ।

'आत्मशरीरेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्यभावफलदुःखापवर्गास्तु प्रमेय (न्या. १–१–९) मित्यादिना सूत्रजातेन ।

द्वादशविधप्रमेयनिरूपणेन *चात्मचरितं प्रतिपादितं भवति । आत्मचरित-

---

१०, ११, १२. चतुर्थोल्लासे—न्यायवैशेषिकयोश्शब्दनित्यत्वसाधकहेत्व न्यथासिद्ध्युपजीवनेन शब्दानित्यत्वव्यवस्थापननिरूपणं च निरुक्तहेतव उपपादिता अनुसन्धेयाः ॥

*टि–'आत्मा तावच्छरीरेऽवस्थितो मनोयुक्तैरिन्द्रियैश्शब्दादीन् विषयानुप-लभमानः तदुपादाने प्रवर्तते । प्रवृत्तश्च तदुपादानेन यदि सुखमुपलभते । तदा तत्र रक्तो भवति । यदि वा दुःखं तदा द्विष्टः। यदि च नोभयं तदोपेक्षते । तत्र दोषशब्दितरागद्वेषमोहजनितप्रवृत्त्याहितवासनातः प्रेत्य भवति । भूत्वा च पूर्वा-

विज्ञानेन च पुमान् संसृतिविरक्तोपवर्गरागी च सम्पद्यते। एवं विधाधिकारिसम्पादकस्य च शास्त्रस्य निश्रेयसफलकत्वं साधीय एवेत्यक्षपादमुनेरभिप्रायः ।

कणभक्षश्च प्रमेयसामान्यनिरूपणप्रवृत्त आत्मादिकमपि प्रमेयं न्यरूपयत्स्वीये दर्शने ।

नैव न्यायवैशेषिकयोरात्मनिरूपणैदम्पर्येण प्रवृत्तिः। षड्दर्शनीसमाख्या एव प्रधानप्रमेयसंस्पर्शिन्योत्र मानम् ।

[1]"सांख्यं योगः पाञ्चरात्रं वेदाः पाशुपतं तथा ।
आत्मप्रमाणान्येतानि न हन्तव्यानि हेतुभिः ॥"

इति वचने आत्मप्रमाणत्वेन न्यायवैशेषिकयोर्निर्देशाभावोमुमर्थं ज्ञापयतीव।

सांख्ययोगौ तु निरीश्वरसेश्वरसांख्यशब्दितौ प्रकृतिविविक्तप्रत्यगात्मस्वरूपनिरूपकौ कपिलपतञ्जलिभ्यां प्रणीतौ ।

मीमांसादर्शनं च काण्डत्रयविभक्तं सपरिकरब्रह्मोपासनानिरूपकं विंशतिलक्षणं भगवता बादरायणेन सङ्कलितम्। इति ।

अत्र प्रमाणप्रमेयनिरूपकयोस्तावन्न्यायवैशेषिकयोर्युक्तं पौर्वापर्यम्। आत्मरूपप्रमेयविशेषनिरूपकयोश्च सांख्ययोगयोः प्रमेयसामान्यव्यवस्थापकवैशेषिकानन्तरभावित्वं साधीयः। सांख्ययोगयोर्विलक्षणात्ममननिदिध्यासनपरयोर्मीमांसादर्शनस्य च सपरिकरब्रह्मोपासनानिरूपकस्य युक्तं पौर्वापर्यम्। प्रत्यगात्ममनननिदिध्यासनयोः प्रत्यगात्मपरमात्मनिदिध्यासनयोश्च पौर्वापर्येणासति बाधके तत्प्रतिपादकानामपि पौर्वापर्यस्य न्याय्यत्वादिति ।

---

नुष्ठितकर्मफलं भुङ्क्ते। पुनश्च तज्जातीयान्तरानुष्ठानफलानुभवोपयिकं शरीरजातं परिगृह्णन् अनन्तदुःखभाजनं भवति। यदापुनस्संसारापादकेषु बाह्येषु विरक्त इन्द्रियाणि बाह्यविषयेभ्यो निरुद्ध्य मन आत्मोन्मुखं करोति। तदा विलक्षणात्म भावनाप्रकर्षेणात्मतत्वं साक्षात्कुर्वन्निरस्तनिखिलाविद्यादिदोषो निष्कृष्टस्वस्वरूपावाप्तिलक्षणनिश्रेयसमधिगच्छतीत्यात्मचरितमत्रानुसन्धेयम् ।

---

१. महाभारत, शान्तिपर्वणि, मोक्षधर्मे ३५० श्लोकः ॥

## ॥ प्रकृतिचरितम् ॥

सौत्रान्तिकादिबौद्धप्रभेदाः अक्षपादौलूक्यादयश्च परमाणूपादानकारणतामातिष्ठन्ते । सांख्ययोगानुसारिणश्च प्रकृतिमूलताम् । मीमांसकाः पुनः प्रकृतिपुरुषशरीरब्रह्मकारणताम् ।

तत्र स्वतन्त्रपरमाणुकारणत्वं सौत्रान्तिकादिमते । ईश्वराधिष्ठितपरमाणुकारण वादश्च वैशेषिकादेः । इति परमाणुकारणवादद्वैविध्यम् । एवं प्रकृतिकारणतावादेऽपि सांख्ययोगभेदेन द्वैविध्यं मन्तव्यम् ।

अत्र परमाणुकारणवादोऽवैदिकः। प्रकृतिकारणवादश्च वैदिकः । प्रकृतिकारणतावादिनीनां अपि सांख्ययोगमीमांसानां यथोत्तरं वेदान्तरङ्गताप्रकर्षः । तथा च पराशरोपपुराणवचनम् ,

'अक्षपादप्रणीते च काणादे सांख्ययोगयोः ।
त्याज्यश्श्रुतिविरुद्धोंऽशः श्रुत्यैकशरणैर्द्विजैः ॥
जैमिनीये च वैयासे विरुद्धांशो न कश्चन ।
श्रुत्या वेदार्थविज्ञाने श्रुतिपारं गतौ हि तौ ॥' इति ।

वेदान्तरङ्गतातारतम्यनिबन्धनश्चास्तिकदर्शनानां क्रमविशेषस्साधीयानेव । इति ॥

## ॥ प्रमाणचरितम् ॥

प्रत्यक्षमात्रप्रमाणवादश्चार्वाकस्य । अनुमानमात्रप्रमाणवादो बौद्धप्रभेदस्य । प्रत्यक्षानुमानप्रमाणवादो बौद्धप्रभेदवैशेषिकयोः । प्रत्यक्षानुमानशब्दप्रमाणवादस्सांख्यानां मीमांसकानां च । प्रत्यक्षानुमानोपमानशब्दप्रमाणवादो नैयायिकानामिति ।

तत्र तावद्गोतमो बौद्धपक्षप्रतिक्षेपेणेश्वराधिष्ठितपरमाणुहेतुकस्थिरप्रपञ्चसद्भावं प्रतिपादयन् प्रमाणनिरूपणप्रवृत्ते स्वीये दर्शने प्रत्यक्षादिप्रमाणचतुष्टयं न्यरूपयत् ।

कणभक्षश्च शाब्दार्थविशेषसद्भावं न्यायदर्शनप्रतिपादितं च स्थिरप्रपञ्चसद्भावं अभ्युपगच्छन्नेव प्रमेयनिरूपके स्वीये दर्शने प्रत्यक्षानुमाने प्रतिपादयन् शब्दोपमानयोश्चानुमान एवान्तर्भावं प्रत्यपादयत् ,

'एतेन शाब्दं व्याख्यातम्' (वै. १, अ. २, आ. ३)

'अस्येदमिति बुद्ध्यपेक्षत्वात्' (वै. १, अ. २, आ. ५) इति सूत्राभ्याम् ।

कपिलादयश्च स्वर्गाद्यतीन्द्रियार्थसंसिद्धिं शब्दैकसम्पाद्यां जानन्तः प्रत्यक्षानुमानशब्दान् प्रमाणान्यभ्युपगच्छन्ति स्मेति ।

अतश्चास्तिकदर्शनानां क्रमविशेष एवमवगम्यते । 'पूर्वं न्यायदर्शनम् । ततो वैशेषिकम् । ततः सांख्यदर्शनं कापिलम् । ततः पातञ्जलं योगदर्शनम् । ततो विंशतिलक्षणं मीमांसादर्शन'मिति ॥

**॥ न्यायवैशेषिकयोः कापिलादिदर्शनपूर्वत्वोपपादनम् ॥**

अयं च क्रमविशेषः षड्दर्शन्याः परिशोलनेनापि सुनिश्चेयः। तथाहि ।

न्यायवैशेषिकयोः पदार्थोद्देशसूत्रप्रतिपाद्यमानस्य षट्षोडशविधपदार्थतत्वज्ञाननिश्रेयससाधनभावस्य [१]प्रतिक्षेपकं सांख्यदर्शनं [२]न्यायवैशेषिकप्रमेयप्रबन्धृनिर्देशकं न्यायवैशेषिकानन्तरभावि भवति ।

[३]सांख्ययोगयोर्न्यायवैशेषिकानन्तरत्वं च प्रमाणचरितप्रतिपादित मनुसन्धेयम् ।

---

टि- १. 'न षट्पदार्थनियमस्तद्बोधान्मुक्तिर्वा' (सां. ५, अ. ७५)

'षोडशादिष्वप्येवं प्रसङ्ग' (सां. ५, अ. ७६) इति सूत्रयोः प्रतिक्षेपप्रकारो द्रष्टव्यः ।

२. 'न वयं षट्पदार्थवादिनो वैशेषिकादिवत्' (सां. १, अ. २५) इति सूत्रे वैशेषिकादिप्रमेयप्रणेतृनिर्देशो बोध्यः । सूत्रघटकादिपदस्य न्यायदर्शनप्रणेतृपरत्वात् । षट्पदार्थोक्तिः षोडशपदार्थोक्त्युपलक्षणत्वाच्च । अभाषिष्ट च विज्ञानभिक्षुः' ननु वैशेषिकाद्यास्तिकवन्न वयं षट्षोडशादिनियतपदार्थवादिनः । अतोऽप्रतीतोऽपि सदसदात्मकस्सदसद्विलक्षणो वा पदार्थोऽविद्येत्यभ्युपेत्य'मिति इति ॥

३. सांख्ययोगयोस्तत्वसमासाख्यस्य सांख्यस्य व्याख्यारूपतया सांख्यप्रवचनसमाख्याभाजोः पौर्वापर्यं च कापिलदर्शने तत्वसमासग्रन्थविस्तररूपे तत्व-

पातञ्जलदर्शनपूर्वत्वोपपादनेनैव पातञ्जलदर्शनभाष्यप्रणेतृबादरायणप्रणीताद्ब्रह्ममीमांसादर्शनात् बादरायणान्तेवासिजैमिनिकर्तृकात्पूर्वमीमांसादर्शनाच्च पूर्वत्वं न्यायवैशेषिकयोस्सिद्ध्यति । पातञ्जलभाष्यस्य बादरायणप्रणीतत्वं तावत्,

'भगवान् पतञ्जलिस्समाधितत्साधनविभूतिकैवल्याख्यपादचतुष्टयात्मकैकाध्यायपरिमितानि सूत्राणि चकार । तेषु च सूत्रेषु भगवान् बादरायणो भाष्यंचकारे' ति नारायणतीर्थयिन सूत्रार्थबोधिनीसमाख्याकेन योगदर्शनव्याख्यानेनावसीयते ।

जैमिनेश्च बादरायणान्तेवासिता, महाभारत आदिपर्वणि (६४) चतुष्षष्टितमाध्यायायगतश्लोकैरवगम्यते ।

[1]'ततस्स महर्षिर्विद्वान् शिष्यानाहूय धर्मतः ।
सुमन्तुं जैमिनिं पैलं शुकं चैव स्वमात्मजम् ॥
प्रभुर्वरिष्ठो वरदो वैशम्पायनमेव च ।
वेदानध्यापयामास महाभारतपञ्चमान् ।' इति ।

किञ्च, 'तर्काप्रतिष्ठानादपि (ब्र. मी. १, अ. १, पा. ३, अ. ४) इति ब्रह्ममीमांसासूत्रेण स्वतन्त्रतर्कमूलपरमाणुकारणत्वादेर्न्यायवैशेषिकादिप्रतिपादितस्याव्यवस्थिततां प्रतिपादयतो मीमांसादर्शनस्य न्यायवैशेषिकाद्यनन्तरभावित्वं स्यात् ।

'तर्कस्याप्रतिष्ठितत्वादपि श्रुतिमूलो ब्रह्मकारणवाद एव समाश्रयणीयः । न प्रधानकारणवादः । शाक्यौलूक्याक्षपादक्षपणकपिलपतञ्जलितर्काणामन्योन्यव्याघा-

---

समासग्रन्थे चाभ्युपगमवादप्रतिक्षिप्तस्येश्वरस्य योगे प्रतिपादनादवसीयते । प्रतिपादितं चैतद्विज्ञानभिक्षुणा सांख्यभाष्यभूमिकायाम्' नन्वेवमपि तत्वसमासाख्यसूत्रैस्सहास्याः षडध्याय्याः पौनरुक्त्यम् । मैवम् । सङ्क्षेपविस्तररूपेणोभयोरपौनरुक्त्यात् । अत एवास्याः षडध्याय्या योगदर्शनस्येव सांख्यप्रवचनसमाख्या युक्ता । इयांस्तु विशेषः । यत् षडध्याय्यां तत्वसमासोक्तार्थविस्तरमात्रम् । योगे त्वाभ्यामभ्युपगमवादप्रतिक्षिप्तस्यैवेश्वरस्य व्यवस्थापनान्न्यूनतापरिहारोऽपीति' इति ॥

---

१. टि. आर्. कृष्णाचार्याभ्यां अनेकदाक्षिणात्यकोशानुसारेण संशोध्य निर्णयसागरमुद्रणालयमुद्रिते महाभारत आदिपर्वणि १०९–११० पुटयोर्द्रष्टव्यम् ॥

तात्तर्कस्याप्रतिष्ठितत्वं गम्यत' इति श्रीभगवद्रामानुजीयनिरुक्तसूत्रभाष्येण च आक्षपादादितर्कानुपात्तवता शारीरकमीमांसापूर्वत्वं न्यायदर्शनादेश्शक्यमनुमातुम् ॥

जैमिनीये च पूर्वमीमांसादर्शने न्यायवैशेषिकप्रतिपाद्यमानस्य शब्दानित्यत्वस्यानुवादपूर्वकं प्रतिक्षेपदर्शनात्पूर्वमीमांसादर्शनादपि पूर्वत्वं न्यायवैशेषिकयोस्सिद्धम्। इति ॥

## ॥ न्यायकोशकारमतखण्डनम् ॥

न्यायकोशकारः पण्डितभीमाचार्यैस्तु न्यायकोशद्वितीयोपोद्घाते ग्रन्थकृच्चरितनामके टिप्पण्याम् ,

'अत्र प्रसङ्गतः षड्दर्शनानां सूत्राणां क्रमस्सर्वग्रन्थसमाकलनात्कथ्यते। पूर्वं बादरायणीयं ब्रह्ममीमांसादर्शनम् । ततो जैमिनीयं धर्ममीमांसादर्शनम्। ततो गौतमं न्यायदर्शनम् । ततः काणादं वैशेषिकदर्शनम्। ततः कापिलं सांख्यदर्शनम् । ततः पातञ्जलं योगदर्शनमिति क्रमं वयं प्रतीमः ।

ब्रह्ममीमांसादिगतन्यायवैशेषिकादिप्रमेयप्रतिक्षेपश्च न न्यायवैशेषिकाद्यनन्तरत्वं ब्रह्ममीमांसादेस्साधयितुमलम् । ब्रह्मसूत्रप्रतिक्षेप्यस्य न्यायदर्शनादिप्रमेयस्यानादिकालप्रवृत्तत्वात् । 'एतेन योगः प्रत्युक्त' इत्याद्यपि अनादिसिद्धयोगदर्शनादिपरमेवेति निरूपयति ।

साख्यशब्दनिर्वचने च 'सांख्यं सम्यक्दर्शनप्रतिपादकं शास्त्रम्। यथा (१) देवहूतीं प्रति भगवतोपदिष्टं सांख्यदर्शनम् (२) नास्तिककपिलप्रणीतो दर्शनविशेषश्च। अत्रेदं बोध्यम्। नास्तिककपिलेन तावत्स्वयं पूर्वप्रणीतस्य द्वाविंशति (२२) सूत्रात्मकस्य विस्तररूपः षडध्याय्यात्मकः कृतः। सांख्यमतप्रवर्तकश्चास्तिकनास्तिकभेदेन द्विविधः। तत्रास्तिकौ द्वौ। देवहूतीपुत्रः कपिलस्सेश्वरसांख्यो, योगशास्त्रप्रवर्तकः पतञ्जलिनामा ब्राह्मणश्च। नास्तिकस्तु निरीश्वरसांख्ये देवहूतीपुत्रादन्य एव कपिलनामा ब्राह्मणः। देवहूतीपुत्रस्तु सांख्यप्रवर्तकश्श्रीवासुदेवावतार आस्तिक एव। 'ऋषिं प्रसूतं कपिलं यस्तमग्रे ज्ञानैर्बिभर्ती'ति श्रुतेः 'सिद्धानां कपिलो मुनि'रिति स्मृतेश्चेति प्रतिपादयति बादरायणीयस्य ब्रह्ममीमांसादर्शनस्य सकलास्तिकदर्शनप्राचीनत्वं सिषाधयिषुः ।

अत्र ब्रूमः । स्यादेवानादिसिद्धन्यायवैशेषिकादिप्रमेयप्रतिक्षेपकत्वमात्रं मीमांसादर्शनस्य तदा, यदि मीमांसादर्शनस्य न्यायादिप्राचीनत्वावगमकप्रमाणान्तरसम्भवः । न च तत्र प्रमाणमुपलभ्यते । असति च प्रमाणान्तरेऽनादिकालप्रवृत्तप्रमेयप्रतिक्षेपकत्वसिद्धौ न्यायादिदर्शनप्राचीनतासिद्धिर्मीमांसादर्शनस्य । न्यायादिप्राचीनतासिद्धौ चानादिकालप्रवृत्तप्रमेयप्रतिक्षेपकत्वसिद्धिरित्यन्योन्याश्रयणमवर्जनीयम् । स्यादेव च जैमिनीयस्य न्यायवैशेषिकप्रमेयजातमनुवदतस्तदनन्तरत्वम् । तस्मान्न मीमांसादर्शनस्य न्यायवैशेषिकदर्शनप्राचीनत्वं सम्भवति । इति ।

यदपि मीमांसादर्शनस्य सर्वदर्शनप्राचीनत्वव्यवस्थापनाग्रहिणा 'ऋषिं प्रसूतं कपिल'मिति श्वेताश्वतरोपनिषत्प्रतिपन्नस्य कपिलस्यास्तिक्यातिरेकेण निरीश्वरसांख्यप्रवर्तकत्वानुपपत्तिरिति प्रतिपादितम् ।

तदपि न । भगवान् बादरायणः खलु निरुक्तश्रुतिप्रतिपन्नाप्तभावकपिलप्रणीतनिरीश्वरसांख्यानवकाशप्रसङ्गं निरीश्वरसांख्योपबृंहितत्वे वेदान्तानां हेतूचकार ।

१'स्मृत्यनवकाशदोषप्रसङ्ग .... ....'दिति

अतश्श्रुतिप्रतिपन्नस्य कपिलस्य भगवदवतारस्य निरीश्वरसांख्यप्रवर्तकत्वं भगवद्बादरायणाभिमतमिति ॥

अस्य च भगवदावेशावतारत्वं 'यस्तमग्रे ज्ञानैर्बिभर्ती'ति श्रुतिवाक्यखण्डेन ज्ञानरूपभगवद्गुणाभिव्यक्त्यवच्छेदकत्वलक्षणमवगम्यते ।

सिद्धे च भगवदवतारकपिलस्य निरीश्वरसांख्यप्रवर्तकत्वे तस्य षडध्यायीप्रणेतृत्वमपि साधीय एव । 'तद्वा तादृग्वेति न कश्चिद्विशेष' इति न्यायात् ।

'गौतमेन तथा न्यायं सांख्यं तु कपिलेन वै' इति पाद्मवचने न्यायवैशेषिकादिसहपठितस्य सांख्यदर्शनस्य षडध्यायीलक्षणस्य कपिलप्रणीतत्वेन प्रतिपन्नस्य *भगवदवतारकपिलप्रणीतत्वस्यैव सम्भवाच्च ।

*टि- अत्रेदं बोध्यम् । तामसानां शास्त्राणां न्यायवैशेषिकपाशुपतादीनामासुरप्रकृतिमोहनाय शङ्करादिभिरस्मदर्हणीयैः प्रणीतत्वप्रतिपादने निर्दिष्टस्य सांख्य

१. ब्रह्ममीमांसायां २ अ. १ पा. १ सूत्रम् ।

योगदर्शनस्य चादिशेषावतारपतञ्जलिमहर्षिप्रणीतत्वम्,

'योगेन चित्तस्य पदेन वाचां मलं शरीरस्य च वैद्यकेन ।

योपाकरोत्तं प्रवरं मुनीनां पतञ्जलिं प्राञ्जलिरानतोस्मि ॥' इति अभियुक्तवचनेनावगम्यते ।

अतस्सांख्ययोगदर्शनयोरार्वाचीनब्राह्मणप्रणीतत्वं न्यायकोशकारप्रतिपादितं न सम्भवति । इति ।

अत आस्तिकदर्शनानां क्रमविशेषोस्मदभिमतस्साधीयानेव ।

स्याद्वा सांख्ययोगदर्शनाभ्यां प्राक्तानत्वं मीमांसादर्शनस्य । न्यायवैशेषिकप्रमेयाण्यनुवदतस्तुतस्य न्यायवैशेषिकानन्तरभावित्वमेवेति सिद्धमास्तिकदर्शनेषु षट्सु न्यायेतरदर्शनप्राचीनत्वं वैशेषिकदर्शनस्य । न्यायस्य च स्वेतरयावद्दर्शनप्राचीनत्वम् ।

अथ मन्येत अनादिनिधनाविच्छिन्नसम्प्रदायाम्नायार्थविचाररूपस्य मीमांसादर्शनस्य न्यायवैशेषिकाद्यनन्तरत्वं न सम्भवतीति ।

सत्यम् । वेदार्थविचारोपि वेदवदनादिकालप्रवृत्त एव । न हि बादरायणात्पूर्वं वेदार्था एव न विचारिता इति शक्यं वक्तुम् । इति । बादरायणसङ्कलितं

---

प्रवर्तकस्य कपिलस्य भगवदवतारत्वं युक्तमेव । ननु तत्रैव वचने कणादादीनां रुद्रशक्त्यावेशस्य प्रतिपादितस्य भगवदवतारेऽसम्भव इति चेत् ।

मैवम् । रुद्रशक्त्यावेशस्य तमोगुणाभिभवलक्षणस्य भगवदावेशावतारेपि जीवे स्वस्वाभाव्येन सम्भवात् ।

जगन्नाशाधिकारं च स्वीयं जानन् पुनारुद्रस्तामसदेवो जगन्नाशौपयिकीं कणादादेस्तामसशास्त्रप्रणयनप्रवृत्तिं स्वीयशक्त्यावेशमूलां स्वप्रियामभाषिष्ट ।

'मच्छक्त्यावेशितैर्विप्रैस्संप्रोक्तानि ततः परम् ।

कणादेन तु संप्रोक्तं शास्त्रं वैशेषिकं महत् । इत्यादिना,

मायवादमसच्छास्त्रं प्रच्छन्नं बौद्धमेव च ।

मयैव कथितं देवि जगतां नाशकारणात् । इत्यन्तेनेति ।

तुन्यायवैशेषिकानन्तरभाव्येव न्यायवैशेषिकप्रमेयप्रतिक्षेपकमिति न किञ्चिदनुपपन्नम् ।

॥ अथ ब्रह्ममीमांसाया न्यायवैशेषिकानन्तरत्वोपपादनम् ॥

तथाहि । ब्रह्ममीमांसाद्वितीयाध्यायद्वितीयपादे परपक्षप्रतिक्षेपपादसमाख्ये द्वितीयं तावदधिकरणं वैशेषिकमतप्रतिक्षेपकमुपलभ्यते सप्तसूत्र्यात्मकम् ।

तत्र प्रथमद्वितीयपञ्चमषष्ठसूत्राणि *न्यायवैशेषिकाभिमतं रूपादिमन्नित्यपरमाणुगतजीवादृष्टकारिताद्यक्रियाजनितसंयोगनिबन्धनं स्थूलप्रपञ्चोद्भवं प्रतिक्षिपन्ति ।

---

*॥ न्यायवैशेषिकयोः परमाणुकारणत्वव्यवस्थापनम् ॥

*टि—न्यायवैशेषिकयोः परमाणुकारणत्वव्यवस्थापनं यथा—'व्यक्ताद्व्यक्तानां प्रत्यक्षप्रामाण्यात्' (न्या. अ. ४, आ. १, सूत्रम् ११) इति न्यायसूत्रं तावत्प्रेत्यभावपरीक्षाप्रकरणस्थं परमाणुं जगत्कारणं प्रतिपादयति । यथा । अत्र तावद्व्यक्तहेतुकत्वं स्थूलप्रपञ्चस्योपपाद्यते । किं पुनर्व्यक्तम्?॥ रूपादिमदतिसूक्ष्मं परमाणुलक्षणम् । अव्यक्तं तदिति चेत् । सत्यम् । अव्यक्तमपि तद्व्यक्तसादृश्याद्व्यक्तमित्युपचर्यत इति । किं पुनर्व्यक्तसादृश्यम्?। रूपादिमत्वम् । कारणविषयं च व्यक्तपदं प्रयुञ्जानस्सूत्रकारः परमाणुकारणतामेव मनुते । प्रधानकारणवादिनो ह्यव्यक्तं प्रधानं कारणमामनन्तीति । किमुक्तं भवति?। रूपादिमतोऽतिसूक्ष्मात्तादृशस्य स्थूलप्रपञ्चस्योत्पत्तिरिति । कुत एतत्प्रतिपत्तव्यम्?। प्रत्यक्षप्रामाण्यात् । दृश्यते खलु रूपादिमतः कपालादेस्तादृशस्य घटादेरुत्पत्तिरिति । प्रत्यक्षप्रामाण्याच्च रूपादिमज्जगत्कारणं व्यवस्थापयन् सूत्रकारः परमाणुकारणत्वमेव मनुते । प्रधानस्यारूपादित्वात् । मूलकारणत्वप्रतिपादनेनैव परमाणोर्नित्यत्वमप्यक्षपादाभिमतम् ।

अक्षपादाभिमतमेव मूलकारणस्य रूपादिमत्वं नित्यत्वं च स्पष्टमेव प्रतिपादयति कणभक्षः,

'सदकारणवन्नित्यम्' (वै. ४—१—१) 'कारणभावात्कार्यभाव' (वै. ४—१—३) इति सूत्रद्वयेन । अभावकारणवादं न्यायप्रतिक्षिप्तं जानंश्च सत्पदं कारणविषयं प्रयुङ्क्ते ।

इदं च वैशेषिकस्य न्यायानन्तरत्वे लिङ्गमिति ।

तृतीयतुरीयसूत्रे *वैशेषिकप्रतिपादितं नित्यमेकं समवायाख्यं पदार्थान्तरं प्रतिक्षिपतः । 'अपरिग्रहाच्चात्यन्तमनपेक्षे'ति सप्तमं सूत्रं च मुमुक्ष्वनुपादेयतां वैशेषिकस्य प्रतिपादयति ।

तत्र परमाणुकारणत्वप्रतिक्षेपस्तावत्परमाणुद्व्यणुकाभ्यां द्व्यणुकत्र्यणुकोत्पत्तिवदन्येषामपि वैशेषिकाभिमतानां असामञ्जस्यं प्रतिपादयता 'महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्या'मिति प्रथमसूत्रेण स्थूलप्रपञ्चानुपपत्तिकारणानवस्थित्यन्तरप्रसङ्गेन चिकीर्षितः ।

---

*टि—अस्य च समवायस्य प्रतिक्षेपः 'समवायाभ्युपगमाच्च साम्यादनवस्थितेः' 'नित्यमेव च भावा'दिति सूत्राभ्यां प्रतिपादितोऽत्रानुसन्धेयः। यथा, 'यदि समवायो नित्यस्स्यात् । स्यात्प्रपञ्चोऽपि तथा । नित्यप्रपञ्चविषयं नेदमनिष्टमिति चे, न्नैवम् । कार्यप्रपञ्चविषयत्वादापादनस्य । कथमेवं भविष्यति ?। सम्बन्धनित्यत्वादेव । सम्बन्धसत्तायाश्च सम्बन्धिसत्तानिर्वाह्यत्वात् । नचेदं नित्यप्रपञ्चसत्तयोपपादनीयम् । अनित्यसम्बन्धिविनाशनिबन्धनानित्यताया अपि सूपपादत्वात् । कथं नित्येऽनित्यत्वोपपादनं सङ्गच्छत इति चे, न्नित्यत्वेऽप्येषोऽनुयोगस्तुल्यः। नित्यानित्यत्वविरोधस्तु कार्यप्रपञ्चनित्यत्वसमवायनानात्वान्यतराभ्युपगमपरिहार्य एव । तत्र प्रथमाभ्युपगमेऽपसिद्धान्तः । परमाण्वीश्वरादिकल्पनं च मनोरथमात्रं स्यात् । तदेतत्प्रतिपादयत् 'नित्यमेव च भावादि'ति ब्रह्ममीमांसासूत्रं प्रवृत्तम् ।

समवायनानात्वाभ्युपगमस्तु न प्रगल्भते । समवायस्यैवाऽसिद्धेः । अपृथक्सिद्धविशेषणान्येव स्वविशिष्टप्रतीतिमुपपादयिष्यन्तीति कल्पकाभिमतस्याऽन्यथैवोपपत्तेः । स्वविशिष्टप्रतीतिनिर्वाहकत्वं चाऽपृथक्सिद्धविशेषणानां समवायस्येवोपपद्यत एव । अन्यथा तत्रापि विशिष्टबुद्धिनियामकसम्बन्धान्तरकल्पनेऽनवस्थापातात् । नित्यानित्यत्वविरोधपरिहाराय समवायनानात्वेऽवश्यमभ्युपगन्तव्ये सति लाघवस्यापि समवायकल्पकस्य विरहात् । अनन्तसमवायतत्सम्बन्धत्वकल्पनातोऽपि क्लृप्तेष्वेवाऽपृथक्सिद्धविशेषणेषु सम्बन्धत्वकल्पनस्यैवौचित्याच्च । अतस्समवायाभ्युपगमोऽसमञ्जसः । तथाच सूत्रं 'समवायाभ्युपगमाच्च साम्यादनवस्थिते रिति॥ इति ।

'अग्नेरूर्द्ध्वज्वलनं वायोस्तिर्यक्पवनमणूनां मनसश्चाद्यं कर्माऽदृष्टकारितम्' (वै. ५–२–१३) इति वैशेषिकसूत्रप्रतिपादितं च जगदारम्भकसंयोगजनकपरमाणु-समवेताद्यक्रियाया अदृष्टकारितत्वं 'उभयथापि न कर्मातस्तदभाव' इति द्वितीय-सूत्रेण प्रतिक्षिप्यते ॥

नित्यसर्गप्रसङ्गेन युगपन्निरुद्धवृत्तीनां अदृष्टानां नानाजातीयकानां आद्विपरा-र्धकालमविपाकेनावस्थानासम्भवाच्चादृष्टजनितक्रियाहेतुकजगदुदयवादोऽनुपपन्न इति निरुक्तसूत्रभावः ।

यत्पुनर्मूलकारणस्य परमाणो रूपादिमत्वेन 'कारणभावात्कार्यभाव' इति सूत्रप्रतिपन्नस्योत्पत्तिसाधकप्रमाणाभावलक्षणं नित्यत्वसाधकत्वेन 'अकारणवन्नित्य' मिति सूत्रयतोऽभिमतं कणभक्षस्य । तत्प्रतिक्षिप्तं भवति, 'रूपादिमत्वाच्च विपर्ययो दर्शनात्' 'नित्यमेव च भावा'दिति पञ्चमषष्ठसूत्राभ्याम् रूपादिमतां घटादीनामनि त्यत्वादिदर्शनात्परमाणोरपि रूपादिमत्वेऽनित्यत्वप्रसङ्गः । तस्य रूपादिमत्वाऽनङ्गी-कारे च तन्मूलं जगदरूपमरसमगन्धमस्पर्शं च स्यादिति रूपादिस्वीकारास्वीकार-योर्दोषस्य जागरूकत्वाद्रूपादिमन्नित्यपरमाणुकारणत्वमनुपपन्नमितीममर्थं प्रतिपादय-द्द्वयाम् ॥

तस्मात्सिद्धं वैशेषिकप्रमेयप्रतिक्षेपकाधिकरणगर्भस्य ब्रह्ममीमांसादर्शनस्य न्यायवैशेषिकानन्तरत्वम् । इति ॥

### ॥ अथ पूर्वमीमांसाया न्यायवैशेषिकानन्तरत्वोपपादनम् ॥

न्यायवैशेषिकयोर्व्यवस्थापितं शब्दानित्यत्वमनूद्य प्रतिक्षिपत् तत्प्रतिपादि-तान्यथासिद्धीनां शब्दनित्यत्वलिङ्गानां प्रतिष्ठापकं च जैमिनीयं पूर्वमीमांसादर्शनं न्यायवैशेषिकानन्तरभावीति निश्चीयते ॥

न च जैमिनीयव्युत्पाद्यशब्दनित्यत्वप्रतिक्षेपकयोर्न्यायवैशेषिकयोस्तदनन्तर-त्वमेव युक्तमिति वाच्यम् । शब्दनित्यत्ववादस्यानादिकालप्रवृत्तत्वात् ॥

अन्यथा पुनर्वेदार्थविचारस्यापि जैमिन्युपज्ञत्वप्रसङ्गः ॥

किन्नाम? । जैमिनेः पूर्वमेव बहवो वेदार्थम् मीमांसमानाश्शब्दनित्यत्व-

मातिष्ठन्त । स एव च शब्दनित्यत्ववादो न्यायवैशेषिकयोः प्रतिक्षिप्तो जैमिनिना च स्वीये पूर्वमीमांसादर्शने व्यवस्थापित इति ॥

अथ जैमिनीयगतस्य न्यायवैशेषिकप्रतिपादितशब्दानित्यत्वप्रतिक्षेपस्याऽवगमो न्यायवैशेषिकयोश्शब्दानित्यत्वप्रतिपादनप्रकारावगमनिबन्धन इति न्यायवैशेषिकगतशब्दानित्यत्वप्रतिपादनप्रकार आदौ निरूप्यते न्यायवैशेषिकयोः पौर्वापर्यावगमाय च ॥

१॥ **न्यायवैशेषिकयोश्शब्दानित्यत्वव्यवस्थापनम्** ॥

तत्र न्याये शब्दानित्यत्वसाधकहेतुप्रतिपादनपूर्वकं शब्दनित्यत्वप्रतिक्षेपः । वैशेषिके च शब्दनित्यत्वपक्षप्रतिक्षेपेण शब्दानित्यत्वसाधनं च दृश्यते यथा, 'सतो लिङ्गाभावात्' (वै. २, अ. २, आ. २६) 'नित्यवैधर्म्यात्' (,, ,, २७) इति वैशेषिकसूत्रद्वयेन तावत्साधकप्रमाणासद्भावबाधकप्रमाणसद्भावाभ्यां शब्दनित्यत्वं प्रतिक्षिप्यते ॥

शब्दनित्यत्वसाधकोच्चारणपूर्वापरकालिकशब्दोपलब्ध्यभावशब्दानित्यत्वसाधकोत्पत्तिलक्षणप्रमाणाभ्याम्,

'[२]प्रागुच्चारणादनुपलब्धेरावरणाद्यनुपलब्धेश्च ।'

'[३]उपलभ्यमाने चाऽनुपलब्धे रसत्वादनपदेशः ॥'

इति न्यायसूत्रप्रतिपादिताभ्यां निरुक्तवैशेषिकसूत्रद्वयविवक्षिताभ्यां शब्दनित्यत्वं प्रतिक्षिप्तं भवति ॥

शब्दानित्यत्वसाधकोत्पत्तिलक्षणप्रमाणमेवोपपादयतः

'अनित्यश्चायं कारणतः' (वै. २, अ. २, आ. २४)

'लिङ्गाच्चाऽनित्यश्शब्दः' (,, ,, ३२) इत्युत्तरसूत्रे ॥

---

१. अस्मिन् प्रकरण उपादीयमानानां सूत्राणामर्थो न्यायभाष्यवैशेषिकसूत्रोपस्कारविशदमनुसन्धेयः ॥

२. न्यायदर्शने–२, अ. २, आ. १८, सूत्रम् ।

३. ,, ,, ,, ३५. ,, ।

निरुक्तप्रथमसूत्रविवक्षितोत्पत्तिलक्षणानित्यत्वव्यवस्थापककारणवत्वहेतूपपादनेन शब्दकारणविभागं प्रतिपादयति,

'नचासिद्धं विकारात्' (वै. २, अ. २, आ. २९)

'अभिव्यक्तौ दोषात्' ( ,, ,, ३०)

'संयोगाद्विभागाच्छब्दाच्च शब्दनिष्पत्तिः' (वै. २—२—३१) इति त्रिसूत्री निरुक्तसूत्रद्वयमध्यपठिता ॥

द्वितीयसूत्रघटकलिङ्गशब्देन च कृतकधर्मोपचारेन्द्रियप्रत्यासत्तिग्राह्यत्वादि शब्दोत्पत्तिसाधकं विवक्षितम् ॥

'आदिमत्वादैन्द्रियिकत्वात्कृतकवदुपचाराच्चे'ति (न्या.२, अ.२, आ.१३) न्यायसूत्रप्रतिपादिता हेतवो निरुक्तसूत्रयोर्निर्दिष्टा वेदितव्याः ॥

इयांस्तु विशेषः । कृतकवदुपचारं तीव्रत्वादिविकारलक्षणं साक्षाच्छब्दानित्यत्वसाधकं प्रत्यपादयदक्षपादः । कणभक्षस्तु 'लिङ्ग'शब्देन तमपि सङ्गृह्णन् कारणवत्वलक्षणहेतूपपादकतया च तं न्यरूपयत् 'नचासिद्धं विकारा'दिति सूत्रे ॥ इति ।

एकवर्णोपलम्भकालिकसर्ववर्णोपलम्भयोग्यदेशस्थसमानजातीयैकव्यञ्जकव्यङ्ग्यत्वनियमभङ्गान्यतरप्रसङ्गाभिव्यञ्जकनाशकालिकशब्दोपलब्ध्यनुपपत्त्यभिभवानुपपत्तिभिः शब्दाभिव्यक्तिपक्षासामञ्जस्यं गोतमाभिमतं मुक्तकण्ठं प्रतिपादयन् कणभक्षश्शब्दतीव्रत्वादिग्रहणानां अभिव्यञ्जकतीव्रत्वादिविषयतामनापद्यमानानां स्वाभाविकतीव्रत्वादिशब्दविकारोपपादकतया विकारहेतुकं शब्दकारणवत्त्वानुमानं सूत्रपत्रं प्रत्यपादयदिति युक्तं काणाददर्शनस्य न्यायप्रतिपादितकारणवत्वरूपशब्दानित्यत्वहेतूपपादकस्य न्यायदर्शनानन्तर्यम् ॥ इति ।

**॥ अथ न्यायवैशेषिकयोश्शब्दनित्यत्वसाधकहेत्वन्यथासिद्ध्युपपादनम् ॥**

न्यायवैशेषिके तावच्छब्दानित्यत्वं व्यवस्थापयती शब्दनित्यत्वसाधकहेत्वन्यथासिद्धिमपि प्रतिपादयतः ॥

तत्र तावच्छब्दनित्यत्वलिङ्गमध्यापनमभ्यासं च

'सम्प्रदानात्' (न्या. २, अ. २, आ. २५)

'अभ्यासात्' ( ,, ,, २९) इति सूत्राभ्या मनूद्य प्रतिक्षिपति न्यायदर्शनम्, '[१]उभयोः पक्षयोरन्यतरस्याऽध्यापनादप्रतिषेधः' '[२]नान्यत्वेऽप्यभ्यासस्योपचारा'दिति सूत्राभ्याम्। कणभक्षमुनिश्च न्यायदर्शननिर्दिष्टामध्यापनस्य शब्दनित्यत्वसाधकतां शब्दनित्यत्वबाद्यभिमतां जानन् शब्दानित्यत्वेऽध्यापनानुपपत्तिप्रसङ्गं शब्दनित्यत्वपर्यवसायिनमसूत्रयत् ॥

'द्वयोस्तु प्रवृत्योरभावात्' (वै. २, अ. २, आ. ३३) इति।

न्यायसूत्रप्रतिपादितं चाऽभ्यासलिङ्गं प्रतिपिपादयिषुर्द्विरुच्चारणविषयसामिधेनीवाचकं श्रौतं प्रथमाशब्दं शब्दनित्यत्वसाधकमसूत्रयत्

'प्रथमाशब्दा' (वै. २, अ. २, आ. ३४) दिति ॥

नन्वभ्यासहेतुप्रतिपादनं चेत्सूत्रकृतोऽभिमतम्। 'तदाऽभ्यासादित्येव सूत्रयेत्। स्वाधीनत्वाच्छब्दप्रयोगस्य। सत्यम्। प्रथमाशब्दस्यापि शब्दस्थैर्यसाधकतामभिप्रयन् पुनः कणभक्षः 'प्रथमाशब्दा'दित्येवाऽसूत्रयत्।

प्रथमाशब्दो हि समुदायघटकप्राथमिकार्थवाचित्वाकारेण साक्षाच्छब्दस्थैर्यहेतुः। स्वघटितश्रुतिवाक्योपस्थापकश्च परम्परयाऽभ्यासहेतूपपादनेनापीति न किञ्चिदपहीनम्।

साक्षाच्छब्दस्थैर्यसाधकं प्रत्यभिज्ञानमपि न्यायदर्शनाप्रतिपादितं सूत्रयति।

'सम्प्रतिपत्तिभावाच्च (वै, २, अ. २, आ. ३५) इति ॥

अथ सूत्रत्रयप्रतिपादितं हेतुजातमनैकान्तिकत्वेन परिहरति।

'सन्दिग्धास्सति बहुत्वे' (वै. २—२—३६) इति।

अत्रेदं बोध्यम्। न्यायदर्शने तावदध्यापनाभ्यासयोरशब्दनित्यत्वासाधकता सूत्रद्वयप्रतिपादिता। कणभक्षस्तु परं सूत्रलाघवं मन्यमानः न्यायदर्शनोक्ता-

१. न्यायदर्शने २. अध्याये २. आह्निके २८. सूत्रम्।

२. ,, ,, ,, ३०॥

ध्यापनाभ्यासयोः तदप्रतिपादितप्रत्यभिज्ञादेश्च साधारणं साधारण्यदूषणमेकेनैव सूत्रेण प्रत्यपादयत्। शीलमिदं कणभक्षस्य। यदक्षपादेन विस्तरशः प्रतिपादितानामर्थानां प्रायश अल्पेनैव स्वीयेन शब्दसन्दर्भेण विषयीकरणमिति।

शब्दानित्यत्वपक्षे च वर्णसङ्ख्यानियमं सामान्यविषयं 'सङ्ख्याभावस्सामान्यतः' (वै. २, अ. २, आ. ३७) इति सूत्रेण प्रतिपादयन् वर्णसङ्ख्यानियमान्यथानुपपत्त्या शब्दनित्यत्वसाधनं निराकृतं मन्यते।

न्यायदर्शनोपपादिताध्यापनहेत्वन्यथानुपपत्तिं शब्दनित्यत्वप्रसञ्जकं प्रतिपादयतो न्यायदर्शननिर्दिष्टाध्यापनाभ्यासौ तदनुक्ते च प्रथमादिव्यपदेशप्रत्यभिज्ञेऽनैकान्तिकत्वेन प्रतिक्षिपतो वर्णसङ्ख्यानियममुपपादयतश्च काणाददर्शनस्य न्यायदर्शनविवरणरूपस्य युक्तमेव न्यायानन्तरत्वमिति ॥

॥ इति न्यायवैशेषिकयोश्शब्दानित्यत्वव्यवस्थापनम् ॥

**॥ जैमिनीये न्यायवैशेषिकादिप्रतिपादितशब्दानित्यत्वहेत्वन्यथासिद्ध्युपपादनेन शब्दनित्यत्वव्यवस्थापनम् ॥**

उपपादितं न्यायवैशेषिकयोश्शब्दानित्यत्वव्यवस्थापनम्। अथ जैमिनीयगतस्तत्प्रतिक्षेपप्रकारः प्रतिपाद्यते।

जैमिनीये च पूर्वमीमांसादर्शने प्रथमाध्यायप्रथमपादषष्ठाधिकरणे न्यायवैशेषिकप्रतिपादितस्य शब्दानित्यत्वस्य प्रतिक्षेपेण शब्दनित्यत्वं व्यवस्थाप्यते 'कर्मैके तत्र दर्शना' (१) दित्यादिना सूत्रजातेन।

इदं च सूत्रं शब्दोच्चारणकाल एव शब्दोपलम्भलक्षणं न्यायवैशेषिकयोरभिमतं शब्दानित्यत्वहेतुमनुवदति। 'अस्थाना' (२) दिति सूत्रं च सतो लिङ्गाभावा'दिति वैशेषिकसूत्रप्रतिपादितं शब्दनित्यत्वव्यवस्थापकोपलब्ध्यभावम्।

उच्चारणकाल एव शब्दोपलम्भमभ्युपगम्यैव न्यायवैशेषिकमतं प्रतिक्षिप्यते।

'समं तु तत्र दर्शनम् (७)

'सतः परमदर्शनं विषयानागमा' (८) दिति सूत्राभ्याम्।

'नित्यवैधर्म्या'दिति सामान्यशब्दं प्रयुञ्जानस्य कणभक्षमुनेरभिमतं करो-

तिकर्मतया शब्दोपदेशलक्षणं शब्दानित्यत्वलिङ्गं 'करोतिशब्दा' (३) दिति सूत्रेणानूदितं तादृशव्यपदेशस्य शब्दप्रयोगविषयत्वेन प्रतिक्षिप्यते।

'प्रयोगस्य पर' (९) मिति सूत्रेण।

स्थितस्यैव शब्दस्याऽनुपलम्भमभिव्यञ्जकविरहनिबन्धनं 'शब्दं करोती'त्यादिव्यपदेशस्य शब्दप्रयोगविषयतां च प्रतिपादयन् जैमिनिमहर्षिश्शब्दाभिव्यक्तिपक्षं स्वाभिमतं मनुते।

न्यायवैशेषिकाभिमता अभिव्यक्तिपक्षदोषाश्च सुधीभिर्नि*रस्या इति च।

अभिव्यक्तिपक्षस्य निर्दोषत्वे च शब्दोत्पादकतयाभिमतानां अभिव्यञ्जकत्वेन तद्गततीव्रत्वादेरेव तीव्रादिभावेन शब्दग्रहणोपपत्तेस्तादृशग्रहणानां शब्दविकारित्वानापादकत्वेन विकारिधर्मकारणवत्त्वाप्राप्तिरिति शब्दनित्यत्वं स्थितम्।

अस्मिन्नेवार्थे शब्दस्य निर्विकारत्वेन नित्यत्वरूपे '[१]वाचा विरूपनित्यये'ति श्रुतिं प्रमाणं 'लिङ्गदर्शनाच्चे (१८) ति सूत्रेण प्रतिपादयिष्यन् श्रुत्या च 'आदिमत्वादैन्द्रियिकत्वात्कृतकवदुपचाराच्चे'ति न्यायसूत्रप्रतिपादितस्य 'अनित्यश्चाऽयं कारणतः' 'लिङ्गाच्चाऽनित्यश्शब्द' इति वैशेषिकसूत्रद्वयसङ्गृहीतस्य च शब्दानित्यत्वानुमानजातस्य बाधितविषयताम्, शब्दानित्यत्वसाधकतयाभिम–

---

*टि–अभिव्यक्तिपक्षदोषनिरासप्रकारश्शाबरभाष्यादौ विशदमनुसन्धेयः। अत्रापि दिङ्मात्रं प्रदर्श्यते॥–यदुक्तमेकवर्णोपलब्धिवेलायां सर्ववर्णोपलम्भप्रसङ्ग इति। तन्न। अभिव्यञ्जकवायुविशेषे वैजात्यस्वीकारात्। समानेन्द्रियग्राह्याणां योग्यदेशस्थानां एकव्यञ्जकव्यङ्ग्यत्वनियमोऽपि न। सावित्रस्य तेजसः चक्षुषघटाद्यभिव्यञ्जकस्यापि नक्षत्राद्यनभिव्यञ्जकतादर्शनात्। भेर्यभिघातादिप्रयोज्यवेगानां वायुविशेषाणां गतिमतां श्रोत्रप्रत्यासत्तेश्श्रोत्रस्थशब्दाभिव्यक्त्युपपत्तेः अभिव्यञ्जकनाशकालिकशब्दोपलब्ध्यनुपपत्तिवादस्यैकपुरुषीयतद्वर्णोपलब्धिकालिकसर्वपुरुषीयतद्वर्णोपलब्धिप्रसङ्गवादस्य चाऽप्रसङ्गः। शब्दाभिभवोऽपि व्यञ्जकवायुविशेषगतसंस्कारपाटवातिशयेनोपपद्यत एवेति।

---

१. (ऋक्–६. अ. ५, आ. २५) मन्त्रे रूपशब्दो विकारपरः।

तयोः कारणवत्त्वविकारयोरसिद्धिं चापादयिष्यन् न्यायवैशेषिकप्रतिपन्नासमर्थभावं प्रत्यभिज्ञादिकमपि शब्दनित्यत्वलिङ्गमातिष्ठत ।

'सर्वत्र यौगपद्यात्' (१४)

'सङ्ख्याभावात्' (१५) इति ।

शब्दवैभवाच्च युगपदनेकदेशस्थपुरुषीयशब्दोपलम्भम् 'आदित्यवद्यौगपद्य' (१०) मिति सूत्रेण प्रतिपादयन् इन्द्रियप्रत्यासत्तिग्राह्यत्वमपि शब्दानित्यत्वलिङ्गम् 'ऐन्द्रियिकत्वा'दिति न्यायसूत्रखण्डविवक्षितम् 'लिङ्गशब्देन वैशेषिकसङ्गृहीतं च प्रतिक्षिप्तं मन्यते ।

ननु 'लिङ्गदर्शनाच्चे'ति यदि श्रुतिं प्रमाणमविवक्षिष्यत् । तर्हि 'श्रुतेश्चे' त्येवाऽसूत्रयिष्यत् । लाघवात् । श्रुतिप्रमाणप्रतिपादकत्वं वाऽस्य सूत्रस्य कथं लभ्यत इति चेत् ।

उच्यते । युक्तमेव शब्दनित्यत्वसाधकप्रमाणप्रतिपादकसूत्रान्त्यपठितस्य निरुक्तसूत्रस्य प्रमाणपरिबृढश्रुतिगोचरत्वम् ।

'सतो लिङ्गाभावा'दिति वैशेषिकसूत्रं शब्दनित्यत्वसाधकप्रमाणाभावप्रतिपादकं कटाक्षयन् पुनर्जैमिनिमहर्षिः प्रमाणपरिबृढमाम्नायं सूत्रयाञ्चकार 'लिङ्गदर्शनाच्चेतीति ॥

॥ इति जैमिनीये न्यायवैशेषिकप्रतिपादितशब्दानित्यत्वप्रतिक्षेपेण शब्दनित्यत्वव्यवस्थापनम् ॥

अतस्सिद्धं पूर्वमीमांसादर्शनस्य न्यायवैशेषिकानन्तरत्वम् ।

तस्मात्स्थितं न्यायदर्शनस्य सकलेतरास्तिकदर्शनप्राचीनत्वम् । वैशेषिकस्य च न्यायेतरास्तिकदर्शनप्राचीनत्वम् ॥

॥ इति षड्दर्शनीपौर्वापर्यनिरूपणम् ॥

॥ इति तर्कशास्त्रनिरूपणे षड्दर्शनीपौर्वापर्यनिरूपणं नाम चतुर्थोल्लासः ॥

## ॥ तर्कशास्त्र निरूपणम् ॥

### ५. न्यायवैशेषिकव्याख्यापरिशीलनम् ॥

### ॥ न्यायभाष्यनिरूपणम् ॥

भाष्यमिदं वात्स्यायनेन महर्षिणा प्रणिन्ये भाष्यलक्षणसमन्वितम्। इदं तावद्भाष्यलक्षणम्

[१]'सूत्रार्थो वर्ण्यते यत्र पदैस्सूत्रानुकारिभिः।
स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः॥' इति,

सूत्रानुकारिभिः पदैस्सूत्रार्थवर्णने स्वपदवर्णनमप्यावश्यकमिति युक्तं स्वपद वर्णनसहितस्य सूत्रार्थप्रतिपादकसूत्रानुकारिपदसमुदायस्य भाष्यत्वम् ॥

अस्त्येव स्वपदवर्णनविशिष्टस्सूत्रार्थप्रतिपादकसूत्रानुकारिपदसमुदायोऽत्रेत्यस्य भाष्यत्वं स्थितम् ॥

एतेन 'स्याद्भाष्यात्प्राचीनमपि व्याख्यानं न्यायसूत्राणाम्। यदीयानि वाक्यानि सूत्रवद्व्याख्यातानि भाष्यकृते'ति तावत्केषांचिद्व्यामोहो भाष्यस्वभावा-पर्यालोचनकृतो विभावनीयः॥ भाष्यगतसूत्रेतरवाक्यार्थवर्णनस्य स्ववाक्यव्याख्या-रूपत्वेनान्यथासिद्धस्य भाष्येतरव्याख्यासद्भावानाक्षेपकत्वात् ॥

अस्य च भाष्यव्यपदेशो न्यायभाष्य [२]न्यायवार्तिकान्तिमश्लोकयोरन्यत्र च बहुलं वरीवर्ति ॥

### ॥ न्यायभाष्यकारचरितम् ॥

अयं च भाष्यकारः (१) वात्स्यायनः, (२) पक्षिलस्वामी (३) पक्षिल-मुनिरित्यादिभिस्समाख्याभेदैः न्यायभाष्यन्यायवार्तिकतात्पर्यटीकासर्वदर्शनसङ्ग्रहादौ गीयते ॥

भट्टश्रीधरश्च न्यायकन्दल्यां पक्षिलनाम्नैनं व्याजहार

'यदिमौ परमास्तिकौ पक्षिलशबरस्वामिनौ नानुतिष्ठत इत्यसम्भावनमिद'मिति।

---

१. पराशरोपपुराणे २८ अध्याये ॥

२. 'यदक्षपादप्रतिमो भाष्यं वात्स्यायनो जगौ।
अकारि महतस्तस्य भारद्वाजेन वार्तिकम् ॥'

### ॥ पक्षिलसमाख्योपपादनम् ॥

पक्षयति परिगृह्णाति तत्वज्ञानमिति पक्षिलः । पक्षशब्दाद्बाहुलिक इलचि पक्षिल इति रूपम् ॥

तत्वज्ञानपरिग्रहश्चोपदेशार्थः । अतस्तत्वज्ञानोपदेष्टुर्वात्स्यायनस्य पक्षिल-समाख्या साधीयसी ॥ यद्वा तत्वज्ञानशब्दितस्य न्यायदर्शनस्य प्रमाणादि निरूप-यतो व्याख्येयत्वेन परिग्रहान्न्यायभाष्यकर्तुः पक्षिलसमाख्योपपत्तिर्बोध्या ॥

### ॥ वात्स्यायनशब्दव्युत्पत्तिप्रतिपादनम् ॥

वात्स्यशब्दात् [१]'गर्गादिभ्यो यञ्' इति सूत्रविहितयञन्तात् [२]'यञिञोश्चे'ति सूत्रेण फकि निष्पन्नाद्वात्स्यायनशब्दाद्वत्सस्य युवापत्यं वात्स्यायनो न्यायभाष्यप्रणे-तेत्यवगम्यते ॥ अस्य च प्रस्तावः पाद्मपुराणे रामाश्वमेधे प्रथमाध्याये दरीदृश्यते ॥ यथा—

'ततः परं धराधारं पृष्टवान् भुजगेश्वरम् ।
वात्स्यायनो मुनिवरः कथामेतां सुनिर्मलाम् ॥' इति ।

### ॥ वात्स्यायनदेशनिरूपणम् ॥

श्रीरामचन्द्रेण तावदयोध्योपकण्ठे सरय्वा उत्तरे तटेऽश्वमेधयज्ञः कृतः । स च देशो वात्स्यायनस्यातिप्रिय इति तद्देशसम्बन्धिनीं कथां आदिशेषं पप्रच्छेति निरुक्तपाद्मवचनेन सम्भाव्यते ॥ अनेन च मिथिलासम्बद्धो निरुक्तदेश एव वा-त्स्यायनस्योत्पत्तिस्थानमित्यवगम्यते । देशविशेषगतात्यादरस्य तद्देशोत्पत्तिस्थानतानि-बन्धनस्य 'जननी जन्मभूमिश्च स्वर्गादपि गरीयसी'ति न्यायसिद्धस्याऽसति बाधके तद्देशोत्पत्तिस्थानताक्षेपकत्वात् ॥

किञ्च, '*तत्रापि मम ते पुत्रा भविष्यन्ति नरोत्तमाः ।

*टि॰ अत्रेदं बोध्यम् । यद्यपि निरुक्तवचनप्रतिपाद्यमानं समानदेशत्वमेक-देशसमावेशलक्षणं विभिन्नदेशोत्पत्तिकयोरपि सम्भवत्येव । अथापि मैथिलास्यां

१. अष्टाध्याय्यां ४ अध्याये, १ पादे, १०५ सूत्रम् ।
२. अष्टाध्याय्यां ४ अध्याये, १ पादे, १०१ सूत्रम् ।

अक्षपादः कणादश्चोलूको वत्स एव च ॥'

इति वायुपुराणवचनं वत्सगोतमयोस्समानदेशताप्रतिपादकमसति बाधके तद्वंश्यस्याऽपि गोतमसमानदेशताव्यवस्थापकं स्यादेव । गोतमस्य च मिथिलादेशो जन्मभूमिः । अतस्सिद्धं वात्स्यायनस्यापि मैथिलत्वम् ॥

एतेन वात्स्यायनस्य काञ्चीमण्डलोत्पन्नत्वं विद्याभूषणोक्तं निरस्तम् । काञ्चीमण्डलस्थत्वसाधकाभिमताश्च अनैकान्तिका प्रतिपादिता न्यायवार्तिकभूमिकायाम् ॥

॥ इति वात्स्यायनस्य देशनिरूपणम् ॥

## ॥ वात्स्यायनकालविचारः ॥

अयं च कस्मिन् काले न्यायभाष्यं प्रणिनायेत्यत्र नैतावतापि निर्णयस्सुकरो भवति । अथापि नानाग्रन्थपरिशीलनावगतमत्र प्रतिपादयामः ।

(१) भद्रबाहुनामा जैनतार्किकस्तावत् 'दशवैकालिकनिर्युक्तिनामके ग्रन्थे दशावयवान् परामर्शवाक्ये निर्दिदेश ॥

तदेतत् 'प्रतिज्ञाहेतूदाहरणोपनयनिगमनान्यवयवाः' इति न्यायसूत्रभाष्येऽनुवदन् प्रतिचिक्षेप वात्स्यायनः ॥

अनेन तावद्भद्रबाह्वनन्तरकालिकत्वं वात्स्यायनस्य प्रतीयते । भद्रबाहोश्च कालः ख्रिस्तोः पूर्वं (B. C. ४३३ प्रभृति ३५७ पर्यन्त) मिति केचित् । अन्ये तु ख्रिस्त्वनन्तरं षष्ठं (A. D. ६) शतकमिति ॥

(२) किं च, न्यायदर्शनप्रथमाध्यायप्रथमान्हिकचतुर्थसूत्रभाष्ये

'आत्मादिषु सुखादिषु च प्रत्यक्षलक्षणं वक्तव्यम् । अनिन्द्रियार्थसन्निकर्षजं हि तदिति । इन्द्रियस्य वै सतो मनस इन्द्रियेभ्यः पृथगुपदेशो धर्मभेदात् । .... ....। मनसश्चेन्द्रियभावान्न वाच्यं लक्षणान्तर'मिति प्रतिपादितं दूषयति दिङ्नागः प्रमाणसमुच्चये प्रथमाध्याये

'न सुखादि प्रमेयं वा मनो वाऽस्तीन्द्रियान्तरम् ।

---

कणादाक्षपादाभ्यां सहपठितस्य वत्सस्यापि मैथिलत्वं सेत्स्यतीति सम्भावनामात्रेण निरुक्तवचनं वात्स्यायनस्य मैथिलत्वे साधकं निर्दिष्टम् ॥ इति ॥

अनिषेधादुपात्तं चेदन्येन्द्रियरुतं वृथा ॥' इति ।

दिङ्नागस्य च कालः ख्रिस्त्वनन्तरं (A. D. ६) षष्ठशतकारम्भ इति वात्स्यायनस्ततः पूर्वकालिकस्स्यात् ॥

अत एव भद्रबाहोर्वात्स्यायनपूर्वत्वेन प्रतीयमानस्य ख्रिस्त्वनन्तरषष्ठशतकावस्थितिर्न सम्भवति ॥

(२) किं च, न्यायदर्शनानादृतावयवपद्धतेर्वसुबन्धुनाम्ना बौद्धतार्किकेण स्वीये न्यायावतारनाम्नि ग्रन्थे प्रतिपादितस्यानिषेधनाद्वात्स्यायनस्य तत्पूर्वत्वमावश्यकम् । वसुबन्धोश्च कालः ख्रिस्त्वनन्तरपञ्चमशतकान्तिमभाग इति वात्स्यायनः ख्रिस्त्वनन्तरपञ्चमशतकारम्भ (A. D. ४००) कालिकस्स्यात् ॥

यत्पुनः लङ्कावतारसूत्रमाध्यमिकसूत्रादिबौद्धग्रन्थेषु ख्रिस्त्वनन्तरचतुर्थशतकारम्भकालिकेषु प्रतिपादितानां विषयाणां न्यायदर्शने प्रतिपादनमत्यन्तानावश्यकमिति तत्प्रतिपादकानां बौद्धग्रन्थस्थसूत्रप्रत्यभिज्ञापकानां पश्चात्तनैर्वात्स्यायनेनैव वा संयोजितानां न्याये तेनैव भाष्यप्रणयनात्तस्य ख्रिस्त्वनन्तरपञ्चमशतकारम्भकालिकता सूत्राणां स्यादिति विद्याभूषणेन प्रतिपादितम् । तन्न समीचीनम् ॥ बौद्धग्रन्थप्रतिपादितार्थप्रत्यभिज्ञापकानां शब्दसन्दर्भाणां [1]श्रुतावप्युपलम्भेन तेषामेव न्याये परिदृश्यमानानां पश्चात्तनैस्संयोजितत्ववादानवकाशात् ॥

न्यायदर्शने बौद्धादिग्रन्थारूढविषयप्रतिपादनमनावश्यकमिति वादश्च दर्शनविशेषस्वभावविशेषानभिज्ञानविजृम्भितः । शीलमिदं ह्यास्तिकदर्शनानां यत्परपक्षप्रतिक्षेपकत्व'मिति । यथा कापिलदर्शनपञ्चमाध्यायस्य परपक्षप्रतिक्षेपकत्वम् । यथा वा ब्रह्ममीमांसादर्शनद्वितीयाध्यायद्वितीयपादस्य । एवमेव न्यायदर्शनचतुर्थाध्याय प्रथमाह्निकस्यापि परपक्षप्रतिक्षेपकत्वं साधीय एवेति ॥

तस्माद्भद्रबाह्वनन्तरकालिको दिङ्नागवसुबन्धुप्राक्कालिकश्च वात्स्यायनः ख्रिस्त्वनन्तरचतुर्थशतकारम्भकालिकस्स्यादिति सिद्धम् ॥

॥ इति वात्स्यायनकालविचारः ॥

॥ इति न्यायभाष्यकारचरितम् ॥

॥ इति न्यायभाष्यनिरूपणम् ॥

---

१. प्रतिपादितञ्चैतच्चौखम्बासंस्कृतग्रन्थमालामुद्रितन्यायवार्तिकभूमिकायां ६७–६८ पृष्ठयोर्द्रष्टव्यम् ॥

## ॥ वैशेषिकभाष्यनिरूपणम् ॥

वैशेषिकदर्शनभाष्यं च प्राचीनं रावणप्रणीतमासीदिति रत्नप्रभानाम्न्याश्शाङ्करब्रह्मसूत्रभाष्यटीकातोऽवगम्यते ।

भाष्यलक्षणानाक्रान्तस्यापि प्राक्तनत्वेन भाष्यव्यवहारोऽस्य संवृत्त इत्यपि तत एवावगम्यते ॥

'भाष्यस्य च विस्तरत्वा'दिति किरणावल्यामुदयनाचार्यैर्निर्दिष्टमिदमेव भाष्यं स्यात् ॥ विवृतं च पद्मनाभमिश्रेण किरणावलीभास्करे । 'भाष्यस्य रावणप्रणीतस्येति'

नैतद्भाष्यमिदानीमुपलभ्यत इति नात्र लेखनीं बहु व्यापारयामः ॥

## ॥ प्रशस्तपादभाष्यम् ॥

इदं च वैशेषिकदर्शननिर्दिष्टद्रव्यादिपदार्थप्रतिपादकं प्रशस्तदेवेन प्रणीतम्॥ व्यपदिश्यते चैतद्बहुषु प्रबन्धेषु भाष्यमिति ।

## ॥ प्रशस्तपादीयस्य भाष्यत्वसमर्थनम् ॥

सम्भवत्येव *सूत्रानुकारिभिः पदैस्सूत्रार्थप्रतिपादकस्य स्वपदवर्णयितुश्चास्य भाष्यत्वम् । तथाहि भाष्यलक्षणं प्रतिपाद्यते ॥

---

*टि—अत्रेदं बोध्यम् । प्रशस्तपादीयस्य तावत्सूत्रानुकारित्वम् अल्पाक्षरकत्वरूपं पदार्थसङ्ग्रहनाम्ना लघुत्वरूपप्रकर्षपर 'प्र'शब्देन चावगम्यते । न चैवं सति विस्तररूपस्य श्रीमद्रामानुजभाष्यादेर्भाष्यत्वं न स्यादिति वाच्यम् । स्वपदवर्णनसहितस्य सूत्रानुकारिभिः पदैस्सूत्रार्थवर्णनस्य भाष्यलक्षणरूपस्य विस्तररूपेऽपि तस्मिन् सम्भवेन भाष्यत्वस्थितेः। भाष्यारम्भप्रतिज्ञादीनां च तत्तद्भाष्यगतानां स्वपदवर्णनरूपत्वेन तद्घटितस्य भाष्यत्वोपपत्तिः । 'स्वपदानि च वर्ण्यन्ते' इति भाष्यलक्षणवाक्यखण्डस्वारस्यपर्यालोचनेन हि तथावगतम् । यद्वा निखिलभाष्यसाधारणं भाष्यलक्षणं अभियुक्तानां भाष्यव्यवहारविषयत्वलक्षणं श्रीमद्रामानुजभाष्यादेः प्रशस्तपादीयस्य च साधीय एव । 'सूत्रार्थे'त्यादि पद्यमपि सूत्रभाष्येषु भाष्यलक्षणसमावेशपरिचायकाकारप्रतिपादकमनुसन्धेयमिति ॥

'सूत्रार्थो वर्ण्यते यत्र पदैस्सूत्रानुकारिभिः ।
स्वपदानि च वर्ण्यन्ते भाष्यं भाष्यविदो विदुः ॥' इति ॥

ननु भाष्यं तावद्व्याख्याविशेषः। व्याख्यात्वं च मूलग्रन्थोपादानपूर्वकं तदर्थप्रतिपादनमेव ॥

न्यायकुसुमाञ्जलौ पञ्चमस्तबके 'कार्ये' त्यादिश्लोकस्य द्वितीय[illegible]-योजनमदं व्याख्यानार्थकतया व्याकुर्वाणश्च न्यायाचार्योदयन इदमेव भाष्यलक्षणं मनुते। आसमन्ताद्भावेन युज्यते मूलग्रन्थोऽनेनेति व्युत्पन्नायोजनशब्दार्थेना हि सप्रतीकधारणस्यैव व्याख्यानस्योपपद्यत इति । अतः प्रशस्तपादीयस्य निष्प्रतीक-धारणस्यानासादितव्याख्यानभावस्य भाष्यत्वं दूरोत्सारितम् ॥

किं च सूत्रार्थवर्णनं नाम सूत्रोपादानपूर्वकम् 'अस्य सूत्रस्यायमर्थ' इति प्रति-पादनं स्यात्। नेदं प्रशस्तपादीये समुपलभ्यत इति नास्य भाष्यत्वं सम्भवतीति चेन्न ॥

अत्रोच्यते । व्याख्यानत्वं नाम[illegible]-करणेन च मूलोक्तार्थप्रतिपादनमेव। तच्च निष्प्रतीकधारणस्याप्युपपद्यत एव ।

सप्रतीकधारणस्यापि व्याख्यानस्य भावेनायोजनपदस्य [illegible] व्याख्यानं साधीय एवेति न ततोऽपि प्रशस्तपादीयस्य [illegible] ॥

सूत्रप्रतीकोपादानपूर्वकसूत्रार्थप्रतिपादनस्य [illegible]श्च न भाभा-यात्। व्यवहारानुरोधित्वात्प्रवृत्तिनिमित्तकल्पनस्य। प्रशस्तपादीयस्य च तद्व्याख्या-दिषु बहुलं भाष्यत्वेन व्यवहारदर्शनात् ।

यथोक्तं न्यायकुसुमाञ्जलावुदयनाचार्यैश्चतुर्थस्तबके 'सिद्धे व्यवहारे निमित्तानु सरणात्। नच स्वेच्छाकल्पितेन निमित्तेन लोकव्यवहारनियमनम्। [illegible] लोकव्यवहारविप्लवप्रसङ्गा'दिति व्यवहारानुरोधित्वं प्रवृत्तिनिमित्तपरिकल्पनस्य ।

अतस्सिद्धं प्रशस्तपादीयस्य भाष्यत्वम् ॥

यत्तु चन्द्रकान्तभट्टाचार्येण स्वीयवैशेषिकदर्शनभाष्यभूमिकायां वैशेषिकद-र्शनस्य भाष्याभावं स्वीयभाष्यारम्भहेतुं प्रतिपादयता,

'प्रशस्तपादीयस्य भाष्यत्वं न सम्भवति। पदार्थसङ्ग्रहनाम्नैव तस्य तत्र निर्दिष्टत्वात्। भाष्यवैलक्षण्यप्रतिपादककिरणावल्यनुरोधाच्चे'ति प्रतिपादितम्।

तन्न समीचीनम्। न हि नामान्तरेण निर्देशमात्रेण भाष्यत्वमपैति। तथासति 'अथ शब्दानुशासन'मिति महाभाष्यारम्भे शब्दानुशासनत्वेन निर्दिष्टस्य महाभाष्यस्य भाष्यरूपत्वस्यैव दुर्वचत्वापातात्॥

वस्तुतः 'प्रणम्य हेतुमीश्वरं मुनिं कणादमन्वतः।
पदार्थधर्मसङ्ग्रहः प्रवक्ष्यते महोदयः॥'

इति प्रशस्तपादभाष्याद्यपद्ये 'पदार्थधर्मसङ्ग्रह' इति न प्रशस्तपादीयस्य निर्देशः। किन्तु काणाददर्शनस्यैव।

द्रव्यादीनां ये धर्मास्साधर्म्यवैधर्म्यरूपाः तत्प्रतिपादकस्य काणाददर्शनस्य निश्रेयसफलकस्य प्रकृष्टव्याख्यारूपवचोविषयीकरणप्रतिपादनपरत्वात् 'पदार्थधर्मसङ्ग्रहः प्रवक्ष्यते महोदय' इति श्लोकखण्डस्य॥

व्याख्यागतश्च प्रकर्षो भाष्यत्वलक्षण एवेति नात्र प्रशस्तपादीयस्य भाष्यत्वोपपादकातिरेकि किञ्चिद्दृश्यत इति तस्य भाष्यत्वं स्थितमेव।

ननु 'पदार्था द्रव्यादयः। तेषां धर्मास्साधर्म्यवैधर्म्यरूपाः। त एव परस्परं विशेषणभूताः। तेऽनेन सङ्गृह्यन्ते। शास्त्रे नानास्थानेषु वितता एकत्र सङ्कलय्य प्रकाश्यन्त इति सङ्ग्रहः। सः प्रकृष्टो वक्ष्यते। प्रकरणशुद्धेस्सङ्ग्रहपदेनैव दर्शितत्वात्। वैशद्यं लघुत्वं कृत्स्नत्वं च प्रकर्षः। सूत्रेषु वैशद्याभावात्। भाष्यस्यविस्तरत्वात्। प्रकरणादीनां चैकदेशत्वा'दिति किरणावलीग्रन्थे लघुत्वं प्रशस्तपादीयस्य भाष्यवैलक्षण्यसाधकं प्रतीयत इति चेत्। मैवम्।

तदा लघुत्वं प्रशस्तपादीयस्य भाष्यत्वाभावं व्यवस्थापयेदपि। यदि भाष्यं विस्तररूपमेवेति नियमस्स्यात्।

नचैवमस्ति। व्याससूत्रभाष्यस्य द्रमिडकारीयस्य लघोर्भावात्। यदभाषि श्रीभगवद्रामानुजार्यवर्यैः

'........पूर्वाचार्यास्सञ्चिक्षिपु'रिति द्रमिडभाष्यादेस्सङ्ग्रहरूपत्वम्॥ इति

तर्हि 'लघुत्वं प्रकर्षः' 'भाष्यस्य विस्तरत्वा'दिति किमभिमतम्। रावणभाष्यवैलक्षण्यमिति ब्रूमः। किरणावलीभास्करे 'भाष्यस्य रावणप्रणीतस्ये'ति व्याख्यानात् ॥

तत्रैव किरणावलीग्रन्थे प्रकरणवैलक्षण्यकण्ठोक्त्या शास्त्रव्यपदेशभूम्ना च संपूर्णतावगमात् प्रशस्तपादीयस्य भाष्यत्वं साधीय एव।

किं च,

अङ्ग भवान् पृष्टो व्याचष्टाम्। प्रशस्तपादीयस्य भाष्यत्वं कैमर्थ्येन प्रतिक्षिप्यत इति।

स्वीयग्रन्थभाष्यत्वायेति चेत्। किमपराद्धं प्रशस्तपादभाष्येण स्वीयग्रन्थभाष्यत्वे? । येन तस्य भाष्यत्वं प्रतिक्षिप्येत।

नन्वेकस्य दर्शनस्यैकेनैव भाष्यग्रन्थेन भवितव्यम्। अतः प्रशस्तपादीयस्य भाष्यस्य सतस्सद्भाव एव स्वीयग्रन्थभाष्यत्वविरोधीति तस्य भाष्यत्वं प्रतिक्षिप्यत इति चेत्।

नैवं वाच्यमायुष्मता। एकस्य दर्शनस्यैकेनैव भाष्येण भवितव्यमिति हि न नियमः। सत्यपि द्रमिडभाष्ये श्रीभगवद्रामानुजार्यवर्यैर्भवभयाभितप्तजनभागधेयवैभवभाविताचतरणैर्भाष्यग्रन्थान्तरारचनात्।

ननु तत्राचरितार्थत्वलक्षणारम्भबीजस्य सद्भावात्सत्यपि भाष्ये भाष्यारम्भो युक्तः। न ह्यतिसङ्क्षिप्तेन द्रमिडभाष्येणातिविस्तृतेन वा वृत्तिग्रन्थेनाऽल्पायुष्केषु मितम्पचमतिषु अतिगभीरब्रह्ममीमांसासूत्रार्थप्रतिपादनं सङ्घटतीति। एवमचरितार्थतामभिप्रयन्तश्च भगवन्तो भाष्यकारा भाष्यारम्भं प्रतिजज्ञिरे।

'भगवद्बोधायनकृतां विस्तीर्णां ब्रह्मसूत्रवृत्तिं पूर्वाचार्याः सञ्चिक्षिपुः। तन्मतानुसारेण सूत्राक्षराणि व्याख्यास्यन्ते' इति। अत्र च प्रशस्तपादभाष्येणैव कृत्स्नसूत्रार्थपरिज्ञानेनाचरितार्थत्वलक्षणारम्भबीजस्याभावाद्भाष्यान्तरारम्भोऽनुपपन्न एव स्यादिति चेत्।

आत्मानमुपालभस्व।

अथ यदि मनुषे। विलक्षणया प्रक्रिययानुपूर्वीतस्सूत्रार्थप्रतिपादनार्थं भाष्यान्तरकृतेरन्यतोऽचरितार्थतासेत्स्यतीति। एवं तर्हि यथार्थप्रतिपादनेऽन्य चरितार्थता भाष्यलक्षणसमन्वयश्च स्वीयग्रन्थस्य स्यात्। तथार्थप्रतिपादने य वता भाव्यम्। नत्वन्यस्य भाष्यत्वादिकं निरसनीयमिति कृतं विस्तरेण॥

तस्मात्सिद्धं प्रशस्तपादीयस्य भाष्यत्वम्॥

॥ इति प्रशस्तपादीयस्य भाष्यत्वसमर्थनम् ॥

॥ इति वैशेषिकदर्शनभाष्यनिरूपणम् ॥

## ॥ वैशेषिकदर्शनव्याख्यानपरिशीलनम् ॥

वैशेषिकदर्शनं तावद्द्रव्यादिप्रमेयनिरूपकसूत्रसमुदायात्मकं आह्निकद्वयग ध्यायदशकपरिमितमुपलभ्यते। तदीयानि तावत्सूत्राणि स्वल्पाक्षरकत्वादिसूत्रल समन्वितानि। तेषु च विश्वतोमुखेषु व्याख्याः प्रवर्तमाना बहुधा भवन्ति।

तत्र भारद्वाजीयवृत्तिनाम्नी वैशेषिकव्याख्या काचन काश्यां कस्यचित्सन्न सिनो निकटे प्रशिथिला आसीदिति न्यायकन्दलीभूमिकायां प्रत्यपादि।

एतत्प्रबन्धा च भारद्वाजो न्यायवार्तिकप्रणेतास्यात्। न्यायवार्तिकगतवैशे सूत्रोपादानभूम्नावगतवैशेषिकशास्त्राभ्यासस्य न्यायवार्तिकप्रणेतुरेव भारद्वा भारद्वाजीयवैशेषिकटीकाप्रणेतृत्वसंभवात्।

वैशेषिकसूत्रव्याख्याने उपस्कारनामके 'वृत्तिकृतस्तु' इत्यत्र निर्दि वृत्तिरियमेव स्यादिति प्रतीमः। नेयमिदानीं समुपलभ्यत इति विरम्यते।

शङ्करमिश्रप्रणीतो वैशेषिकसूत्रोपस्कारो जयनारायणभट्टाचार्यप्रणीता क सूत्रविवृतिश्चन्द्रकान्तभट्टाचार्यप्रणीतं वैशेषिकभाष्यमिति व्याख्यात्रयं पुनस्स लभ्यते। तत्र विवृतिः प्रायेणोपस्कारानुसारिणी क्वचित् क्वचिदन्यथा च वर्त तत्र विवृतिव्याख्यानस्योपस्कारानुरोधिनोऽपि प्रायशस्सामीचीन्यमेवानुमन्यते। कान्तभाष्यं च प्रायः प्राचीनव्याख्याननुरोधि दृश्यते।

उक्तं च वैशेषिकभाष्यभूमिकायां चन्द्रकान्तेनैव

'सूत्राणां सरलव्याख्याकरणायैव ममायमुद्यमः। सूत्रपाठस्यायथाभूतल

...त् क्वचिदकामेनापि कौटिल्यमनुसृतम् । अस्मत्व्याख्यालालसया प्राचीननिबन्ध...तप्रचलितमतस्यापि वैपरीत्यमत्र सञ्जातमिति ।

निरुक्ते च व्याख्यात्रये यथामति सामञ्जस्यादि निरूप्यते ।

(१) 'तद्वचनादाम्नायस्य प्रामाण्यं' (वै. १, अ. १, आ. ३, सूत्रम्)

निरुक्तसूत्रघटकतच्छब्दस्य प्रसिद्धपरामर्शित्वभावावलम्बनेनेश्वरवाचित्वं स्वी-...श्वरोक्तत्वादाम्नायस्य प्रामाण्यं सेत्स्यतीत्यर्थ उपवर्णित उपस्कारविवृत्योः ।

विवृतौ तच्छब्दस्य ब्रह्मवाचित्वं 'ओं तत्सदिति निर्देशो ब्रह्मणस्त्रिविधो मत' वचनसिद्धमित्यप्यवर्णि ।

'यद्वा तदिति सन्निहितं धर्ममेव परामृशति । तथा च धर्मस्य वचनात्प्रति...ादाम्नायस्य वेदस्य प्रामाण्यम् । यद्धि वाक्यं प्रामाणिकमर्थं प्रतिपादयति । ...ाणमेव यतः । इत्यर्थः' इत्युपस्कारे प्रतिपादितं धर्मवचनादाम्नायप्रामाण्यमत्र...तीये भाष्ये प्रत्यपादयच्चन्द्रकान्तो निरुक्तसूत्रघटकतच्छब्दस्य पूर्वसूत्रप्रक्रान्त...ाचित्वे स्वारस्यातिरेकं मन्वानः ।

अत्र विचारयामः । किमर्थमिदमुच्यते तद्वचनादाम्नायस्य प्रामाण्यमिति ? । ...यप्रामाण्यसिद्ध्यै इति चेत् । सैव कुतः ? । धर्मव्यवस्थोपपत्त्या इति चेत् । ...पुनराम्नायप्रामाण्यसिद्ध्या धर्मव्यवस्थित्युपपत्तिः । दृष्टादृष्टफलसाधनतायामन्यानु-...पायेन प्रतिपादनादिति चेत् । एवं तर्हि [illegible] कमाम्नायप्रामाण्यसाधनं ...व्यवस्थामुपपादयिष्यति । तादृशलिङ्गपरत्वं निरु[illegible]स्यैवेति निश्चयः । न हि ...तिपादनलिङ्गकमाम्नायप्रामाण्यसाधनं धर्मव्यवस्थायां कल्पते । [illegible] ...सत्त्वलक्षणधर्मव्यवस्थाम्नायप्रामाण्यसिद्धेः [illegible] ...म्नायप्रामाण्यसाधकत्वायोगात् । किन्त्वाप्तोक्तत्वहेतुकानुमानमिति आप्तोक्त...त्वहेतुपरत्वं निरुक्तसूत्रस्यावश्यकम् ।

न च धर्मस्वरूपस्य बौद्धादिविप्रतिपन्नतया [illegible] ...म्नायप्रामाण्यानुमानस्य धर्मव्यवस्थासाधकत्वं सम्भवत्येवेति वाच्यम् । नाप... बौद्धादिविप्रतिपन्न[illegible] प्रामाण्य[illegible]

गात्। वस्तुतो बौद्धाद्यागमानामपि प्रामाण्यप्रसङ्गेन धर्मस्वरूपवचनमात्रस्याम्नाय प्रामाण्यसाधकत्वायोगाच्च ॥

एतेन 'आम्नायप्रामाण्यप्रतिपादनं न धर्मव्यवस्थोपपत्त्यै क्रियते। किं त्वाम्नायप्रामाण्यपरिज्ञानार्थमेव। शास्त्रे व्युत्पादनीयं च आम्नायप्रामाण्यानुमानं धर्मवचनलिङ्गकं धर्मप्रसङ्गादत्रैव निरूपितम्। नचायं नियमः। विमृश्यैवार्थस्यावधारणमिति। किं तु विमृश्य पक्षप्रतिपक्षाभ्यामर्थावधारणं लोके। शास्त्रे वादे च विमर्शवर्जमपी'ति चन्द्रकान्तमतमपास्तम्। धर्मव्यवस्थोपपादनेनाम्नायप्रामाण्यसाधनस्य सम्भवति सार्थक्ये तदुपेक्षाया अन्याय्यत्वाच्च ॥

किं च, यदि 'तद्वचनादाम्नायस्य प्रामाण्य'मिति सूत्रघटकस्य तच्छब्दस्य धर्मवाचित्वं स्वीक्रियते। तदा 'तद्विशेषप्रसूता'दित्येवोपरितनसूत्रप्रक्रमस्साधीयान्।

अतोऽपि आप्तोक्तत्वहेतुपरत्वमेव तद्वचनशब्दस्य कणादाभिमतम्।

अतो निरुक्तसूत्रघटकतच्छब्दस्य धर्मपरतया व्याख्यानं 'शास्त्रे वादे च विमर्शवर्जमपी'त्यादिन्यायभाष्यवाक्यघटनया स्वग्रन्थस्य भाष्यत्वं प्रतिपिपादयिषुणा चन्द्रकान्तेनाद्रियमाणं सूत्रकारतात्पर्याननुगुणं नोपादेयं मूलाशयं जिज्ञासमानैः। व्याख्यानस्य मूलकाराभिप्रायानुरोधिन एव मूलाभिप्रायावजिगमिषुभिरुपादेयत्वात्।

उपस्कारे पुनस्तत्पदस्य धर्मपरतया द्वितीयव्याख्यानेऽनास्था वाशब्देनैव सूच्यत इति न काचित् क्षतिरुपस्कारानुरोधिनि सूत्रार्थनिर्णये।

(२) 'प्रथमाशब्दात्' (वै. २, अ. २, आ. ३४, सूत्रं)

इदं च सूत्रम् 'त्रिः प्रथमामन्वाह त्रिरुत्तमा'मिति श्रुतिघटकं प्रथमाशब्दं त्रिरुच्चारणविषयसामिधेनीवाचकं शब्दस्थैर्यसाधकं प्रतिपादयतीति उपस्कारविवृत्योर्व्याख्यातम् ॥

चन्द्रकान्तस्तु 'प्रथमादिशब्दा'दिति सूत्रपाठं परिकल्प्य सामिधेनीगोचराणां प्रथमादिशब्दानां साक्षाच्छब्दस्थैर्यसाधकत्वं प्रतिपादयतीत्यभाषिष्ट ॥

अत्र ब्रूमः। शङ्करमिश्रादिप्राचीनव्याख्यात्रभिमतपाठानादरेण सूत्रपाठान्तर परिकल्पनं सति प्राचीनसत्रानधिगम्येऽर्थविशेषे साधीयः। नाऽन्यथा। नचात्र सूत्र

पाठान्तरपरिकल्पनायां प्रयोजनमस्ति । 'प्रथमाशब्दा'दिति सूत्रोक्तस्य प्रथमाशब्दस्यैव श्रौतप्रथमाव्यपदेशरूपस्य शब्दनित्यत्वसाधकतासम्भवात् । तस्मात्सूत्रपाठभेदपरिकल्पनमयुक्तम् ।

किञ्च, प्रथमादिव्यपदेशगतशब्दस्थैर्यसाधकतामत्रस्य विवक्षितत्वे सामिधेनीगोचरप्रथमादिव्यपदेशोपादानमनवसरम् । दृश्यते खलु लौकिकेष्वपि महावाक्येषु घटकानां पदानां प्रथमादिव्यपदेश इति ।

अथ मन्येत । अभ्यर्हितश्रौतप्रथमादिव्यपदेशस्य सामिधेनीगोचरस्योपादानं साधीय इति । स्यादेतदेवम् । यदि मध्यमसामिधेन्या अपि मध्यमत्वेन श्रौतव्यपदेश उपलभ्येत । 'त्रिः प्रथमामन्वाह त्रिरुत्तमा'मिति श्रुतिखण्डे च प्रथमोत्तमसामिधेन्योरेव तथाव्यपदेशो वरीवर्ति । किञ्च, शब्दसामान्यगोचरप्रथमादिव्यपदेशसामान्यशब्दस्थैर्यसाधकतापरसूत्रानपेक्षितश्रौतव्यपदेशत्वनिबन्धनाभ्यर्हितत्वसमाश्रयणमनुपपन्नम् ,

तस्मात्सरलव्याख्याचिकीर्षानिबन्धनं पाठभेदपरिकल्पनं सूत्रतात्पर्यानवबोधनिबन्धनम् ॥

'प्रथमाशब्दा'दिति सूत्रं किलाभ्यस्यमानसामिधेनीगोचरस्य प्रथमाशब्दस्य शब्दस्थैर्यहेतुत्वं प्रतिपादयदभ्यासलक्षणहेतुप्रतिपादनेऽतिशयिततात्पर्यवच्चकास्ति ।

कथं पुनरभ्यासहेतुप्रतिपादनेऽस्य सूत्रस्य तात्पर्यातिशय उन्नीयते । शब्दनित्यत्वव्यवस्थापकाध्यापनानुपपत्तिप्रतिपादकसूत्रानन्तरभावित्वादेव । कथमन्तराश्चाध्यापनहेतुप्रतिपादकसूत्रानन्तरभाविनोऽस्याभ्यासहेतुप्रतिपादकत्वं शक्यावगमम्? । वैशेषिके बहुष्वधिकरणेषु न्यायानुसारदर्शनात् । न्याये चाध्यापनहेत्वनन्तरतयाभ्यासहेतोः प्रतिपादनात् ।

तस्मादभ्यासहेतुपरतया 'प्रथमाशब्दा'दिति सूत्रव्याख्यानमेवोपस्कारादतं साधीय इति ।

(३) 'सन्दिग्धास्सति बहुत्वे' (वै. २, अ. २, आ. ३६, स)

'सङ्ख्याभावस्सामान्यतः' (वै. २, अ. २, आ. ३७, सू)

इति सूत्रद्वयमुपस्कारकारादिभिस्स्वीकृतम् ॥

चन्द्रकान्तस्तु 'सति बहुत्व' इति पूर्वसूत्रभागमुत्तरसूत्रावयवत्वेन पठति। 'सति बहुत्वे सङ्ख्याभावस्सामान्यत' इति। अभाषिष्ट च वर्णसङ्ख्यानियमस्य वर्णस्थैर्यव्यभिचारितोपपादकं बहुष्वैक्यव्यपदेशं प्रतिपादयत्सूत्रम्।

अत्र ब्रूमः नात्र पाठभेदकल्पना सम्भवति। 'सति [१]बहुत्व' इति सूत्रखण्डस्य 'सन्दिग्धा' इति सूत्रखण्डप्रतिपादितव्यभिचारितोपपादकत्वात्।

किं च पूर्वसूत्रावयवस्य सत'स्सतिबहुत्व' इत्यंशस्य प्रकृतशब्दनित्यत्वसाधकहेतुसामान्यव्यभिचारितोपपादकत्वे सम्भवति तस्योत्तरसूत्रावयवतापरिकल्पनेन 'सतिबहुत्वेसङ्ख्याभावस्सामान्यत' इति समुदायस्य सङ्ख्यानियमव्यभिचारितोपपादकतया व्याख्यानमनुपपन्नम्। अप्रकृतसङ्ख्यानियमरूपहेतुविशेषव्यभिचारितोपपादकतया 'सति बहुत्वे सङ्ख्याभावस्सामान्यत' इति सूत्रप्रवर्तने प्रकृताध्यापनादिहेतुव्यभिचारितानुपपादनेन न्यूनता च।

तस्माच्छब्दनित्यत्वसाधकतयाभिमतानां अध्यापनादिहेतूनां व्यभिचारेण दुष्टत्वे 'सन्दिग्धास्सति बहुत्व' इति सूत्रेणापादिते प्रसक्तवर्णसङ्ख्यानियमकथन्ताशङ्कापरिहारपरतया 'सङ्ख्याभावस्सामान्यत' इति सूत्रप्रवर्तनं वर्णसङ्ख्योपपादनेन च वर्णसङ्ख्यानियमव्यभिचारसमर्थनमेव साधीयः।

एतेन 'सति बहुत्वे सङ्ख्याभावस्सामान्यत' इति सूत्रव्याख्यानस्य वर्णसङ्ख्योपपादकत्वमेवेत्यपि परास्तम्। वर्णसङ्ख्यानियमोपपादनप्रयोजकवर्णसङ्ख्यानियमानुपपत्त्याशङ्काद्यप्रतिपादननिबन्धनन्यूनतायाभावात्। पूर्वोत्तरग्रन्थपरामर्शेन सङ्ख्या नियमव्यभिचारोपपादनप्रवृत्तत्वावगमाच्च। इति।

अत्रचोपात्तानि सूत्राणि न्यायवैशेषिकयोरास्तिकदर्शनत्वनिरूपणटिप्पण्यां तयोश्शब्दानित्यत्वव्यवस्थापननिरूपणे चास्माभिरुपपादितानीत्येतेषां सूत्राणां चन्द्रकान्तादृतो व्याख्याप्रकारोसमञ्जसः प्रतिपादितः। एवमेव सूत्रान्तरव्याख्यानेष्वप्यसामञ्जस्यं द्रष्टव्यम्। क्वचिदेकत्र प्रतिपाद्यते।

१. सूत्रघटकों बहुत्वशब्दोऽनित्यत्वपरो बोध्यः ॥

(४) 'अद्रव्यवत्त्वेन द्रव्यम्' (वै. २, अ. १, आ. ११, सू)
'क्रियावत्त्वाद्गुणवत्त्वाच्च' (वै, २, अ. १, आ. १२, सू)
इति सूत्रद्वयं वायुपरीक्षाप्रकरणगतं वायुपरमाणुं द्रव्यं साधयतीति व्याख्यातमुपस्कारविवृत्योः ।

चन्द्रकान्तस्तु 'न च दृष्टानां स्पर्श इत्यदृष्टलिङ्गो वायु'रिति पूर्वसूत्रप्रतिपन्नो वायुः क्रियावत्त्वाद्गुणवत्त्वाच्चद्रव्यमेवेति स्थूलवायोर्द्रव्यत्वसाधकं निरुक्तसूत्रद्वयमभाषिष्ट ।

अत्र ब्रूमः । यदुक्तं अद्रव्यस्योपलभ्यमानस्पर्शस्याश्रयत्वेन वायोर्महतो द्रव्यत्वमिति प्रथमसूत्रभाष्ये । तत्पूर्वसूत्रेणैव सिद्धमिति न साधनमर्हति । अतस्तादृशार्थपरत्वे सूत्रस्यानर्थक्यमेव । 'न च दृष्टानां स्पर्श इत्यदृष्टलिङ्गो वायु'रिति पूर्वसूत्र एव खलु उपलभ्यमानो विलक्षणस्पर्शो द्रव्याश्रितो गुणत्वाद्रूपवदित्यनुमानेनेतरबाधसहकृतेन विलक्षणस्पर्शाश्रयस्य वायुसमाख्यस्य द्रव्यस्य सिद्धिरभिमतेति ।

न च वायुसाधकस्य स्पर्शस्याद्रव्यत्वप्रतिपादने सूत्रतात्पर्यान्न वैयर्थ्यशङ्कावकाश इति वाच्यम् । स्पर्शादिगुणस्याद्रव्यतायाः पदार्थोद्देशसूत्रप्रतिपादितायाः प्रतिपादनेऽपि सूत्रवैयर्थ्यानपायात् ।

अत एव क्रियावत्त्वाद्गुणवत्त्वाच्चाद्रव्यवत्त्वेन द्रव्यमिति सूत्रव्याख्यानमपि न साधीयः ।

किञ्च, अतिप्रसञ्जकहेतुपरतया प्रथमसूत्रव्याख्यानं अतिप्रसङ्गपरिहारकतयोत्तरसूत्रप्रवर्तनं च सूत्रकारानभिमते 'प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वर'मिति न्यायविदां त्याज्य एव । न खलु कणभक्षमुनिरतिप्रसञ्जकं हेतुमसूत्रयदिति शक्यसंभावनमिदमिति ॥

किञ्च, धर्मिग्राहकमानेन द्रव्यत्वेन सिद्धस्य स्थूलवायोर्द्रव्यत्वसाधनमनवसरम् । क्रियागुणाभिव्यञ्जप्रतिपादनमपि 'वायोर्वायुसम्मूर्छनं नानात्वलिङ्ग'मिति (वै. २, अ. १, आ. १४) सूत्रेणैव सिद्धमिति चन्द्रकान्तमते 'अद्रव्यवत्त्वेन द्रव्यम्' 'क्रियावत्त्वाद्गुणवत्त्वाच्चे'ति सूत्रद्वयं व्यर्थमेवापद्यते ।

अतस्स्थूलवायुनिर्वाहकवायुपरमाणुरूपद्रव्यपरत्वमेव निरुक्तसूत्रद्वयस्य साधीयः ।

अत एवाद्रव्यत्वेन नित्यत्वमुक्त'मित्यनन्तरसूत्रे (वै. २, अ. १, आ. १३) वायुपरमाणोर्नित्यत्वसाधनमप्युपपद्यते । न हि वायुपरमाणोरप्रकृतत्वे तस्यनित्यत्वसाधनं सङ्गाघटीतीति ।

'तस्य द्रव्यत्वनित्यत्वे वायुनाव्याख्याते' इत्युत्तरसूत्राणि च वायुपरमाणुगत-द्रव्यत्वनित्यत्वसाधकसूत्राणां वायुपरमाणुविषयतां द्रढयन्ति । इति ॥

ननु वायुपरमाणोर्द्रव्यानाश्रितत्वप्रतिपादनं नेदभिमतम् । तर्हि अद्रव्यत्वेन द्रव्यमित्येव सूत्रणं साधीय इति चेत् । सत्यम् । अथापि अद्रव्यमिति सूत्रणे कस्यचिन्मन्दधियस्तत्पुरुषसमासभ्रान्तिमतो व्याहतोक्तित्वशङ्कां सम्भावयता पुनः कणभक्षेण 'अद्रव्यवत्त्वेन द्रव्यमित्येव सूत्रितम् ।

एतादृशशङ्कानवकाशादेव परमाणुनित्यत्वसाधकसूत्रेऽद्रव्यत्वशब्देनैव नित्यत्वहेतुर्निर्दिष्ट इति न काचित् क्षतिरिति ।

तस्मात्प्रायेण सूत्रकाराभिप्रायाननुरोधिनश्चन्द्रकान्तीयभाष्यस्य न यथावस्थितसूत्रार्थविज्ञानायोपादानं साधीयः । उपस्कारादिकमेव च यथावस्थितार्थबोधकं वैशेषिकहृदयावजिगमिषुभिरुपादेयमिति सिद्धम् ॥ इति श्रीः ॥

॥ इति तर्कशास्त्रनिरूपणे न्यायवैशेषिकव्याख्यापरिशीलनं नाम पञ्चमोल्लासस्समाप्तः ॥

**॥ इति तर्कशास्त्रनिरूपणं समाप्तम् ॥**

